# KĀVYĀLAṄKĀRASĀRASAṄGRAHA

OF

# UDBHAṬA

*With the 'Vivṛti'*



Critically Edited with Introduction and Indexes
BY
K. S. RAMASWAMI SASTRI SIROMANI
S'rauta Pandit, Oriental Institute, Baroda

1931
Oriental Institute
BARODA

# विषयानुक्रमणी ।



---

# भूमिका ।

अतिप्राचीनेष्वलङ्कारनिबन्धनेष्वन्यतमस्य काश्मीरकभट्टोद्भटप्रणीतस्य काव्यालङ्कारसारसङ्ग्रहाख्यस्य निबन्धरत्नस्य नातिचिरेण समुपलब्धाऽनिर्ज्ञातप्रणेतृनामधेया सेयं व्याख्या श्रीगायकवाडप्राच्यग्रन्थमालायामिदम्प्रथमतया सम्पाद्य पुरातनसाहित्येतिहासविमर्शनकुतूहलिनां सहृदयानां पुरतः समुपह्रियते ।

सत्यामपि प्रतीहारेन्दुराजप्रणीतलघुवृत्तौ नेयं विवृतिरन्यथासिद्धतामात्मना मनागपि प्राप्नुयादिति प्रबन्धद्वयमवलोकयतां पण्डितानां नैव जातु भवेत्तिरोहितम् । उद्भटनिरूपितं पन्थानं प्रतीहारेन्दुराजादृतं विवरणञ्च विशेषतो विवेचयन्तीयं व्याख्याऽर्वाचीनकाश्मीरकालङ्कारिकसम्मतं विचारमनुसरन्ती निपुणं निरूपयेदेवात्मनो निबन्धारं प्रतीहारेन्दुराजादर्वाचीनम् । अन्तरा च प्रतीहारेन्दुराजमुद्भटनिबन्धविवेचनाय प्रवृत्तो राजानकतिलको भवेद्भूयसा श्रुतपूर्व एव राजानकजयरथविमर्शिनीपरिशीलिनाम् । नाम्ना केवलं प्रथां प्राप्तो राजानकतिलकस्योद्भटविवेकः नैतावताऽपि कालेन स्वरूपतः प्रत्यभिज्ञातः क्वचिदपि लिखितग्रन्थार्जनसंरक्षणतत्परेषु पुस्तकभाण्डागारेषु स्थितिमलभत न वा ग्रन्थसम्पादनधुरंधराणामैकाग्र्येण काश्मीरादिप्रदेशानटतां महोदयानां हस्ताभ्याशमवाप ।

परन्तु दुर्लभतमानां कथामात्रतयाऽवशिष्टानाञ्च ग्रन्थरत्नानामाकरभूतेषु केरलेषु कस्यचिन्नारायणनंबूदिरिपाडाख्यस्य पण्डितस्य ग्रन्थागारादुद्धृतमिदं व्याख्यारत्नं मद्रास्राजकीयलिखितग्रन्थागारे क्रमेण वटोदराराजकीयपुस्तकालये च स्थितिमभजत । सा चेयं व्याख्या राजानकतिलकप्रणीतोद्भटविवेकान्नान्येति सयुक्तिकं समनन्तरप्रस्तावनायां निरूप्यते । अलङ्कारनिबन्धेतिहासमारचयद्भिश्च विमर्शकैरुदासितमेतद्व्याख्याऽन्वमर्शनमेतावता यतोऽत्रादावन्ते वा प्रणेतुर्नाम नोल्लिख्यते ।

विख्यात-मुंबईसंस्कृतग्रन्थावलौ बनहट्टीमहोदयेन संपादितकाव्यालङ्कारसारसङ्ग्रहप्रान्तेष्वंशतो मुद्रिताऽपीयं व्याख्या न सर्वांशेनापि शुद्धिमापादिता बहिरात्मानमाविश्चकार नापि राजानकतिलकसंबन्धेन शोभामापादितेति पृथगस्याः सम्पादने गायकवाड्प्राच्यग्रन्थमालायां प्रकाशने च समादरोऽजनिष्ट । एतत्सम्पादनञ्च केवलं केरलमातृकातः समापादितप्रति-

कृतिबलेनैव समजायतेति, मन्ये, जानीयुरेत्र पण्डिता एकमातृकावलम्बिनः सम्पादकस्य संभावितान् सहजान् परिश्रमान्। मातृका च न विशेषतोऽशुद्धिबहुला विना कांश्चित्स्थलविशेषान्। यथायोगश्च तत्र तत्र लुप्तो ग्रन्थभागो व्याख्यायामपरिशोधितोंऽशो मूलग्रन्थे च समुन्नीय सम्पादितो विदुषां तोषाय कल्पेतेति संभावये ।

काश्मीरकराजानकतिलकप्रणीतस्य चास्योद्भटविवेकस्य दूराद्दवीयसि दक्षिणे देशे समुपलम्भनं नाम नातीवासंभावितमाश्चर्यकरं वा यतोऽभिनवभारतीवक्रोक्तिजीवितव्यक्तिविवेकशृङ्गारप्रकाशादीनां ग्रन्थरत्नानां निधानतया विख्यातः केरलानां जनपदः ।

तस्य चास्य ग्रन्थस्य रक्षकौ नारायणनंबूदिरिपाड्मद्रास्राजकीयलिखितग्रन्थालयाधिपती तथांऽशतः सम्पादयिता बनहट्टीमहोदयश्च समग्रस्यापि पण्डितकुलस्य सादरसम्माननामर्हन्तीति नेदं वचनमप्राप्तकालम् ॥

इति

बरोडा
१-१२-१९३०.

रामस्वामिशास्त्री ।

# प्रस्तावना

## १. भट्टोद्भटः ।

### तस्य जीवितसमयो निवासभूमिश्च ।

सरसरमणीयेषु कविपुङ्गववचोविन्यासेषु सारास्वादनतत्पराणामनवद्यविद्यावैभवविस्फूर्जितकविसमयशिक्षणविचक्षणानां सहृदयानामावासभूतः काश्मीरप्रदेश एव श्रीमतः काव्यालङ्कारसारसङ्ग्रहप्रणेतुः भट्टोद्भटस्य निवासोऽभिजनश्च बभूवेति सम्भावयति सोऽयं टकारान्तस्तदभिधायकः काव्यज्ञगोष्ठीगरिष्ठांस्तादृशानेवानतिविप्रलम्भमभिदधानः । शृणुमश्च राजतरङ्गिणीप्रणेतुः कल्हणात्काश्मीरकं कञ्चन पण्डितवतंसं भट्टोद्भटनामानम् । यो हि काश्मीरकभूपतेर्जयापीडस्य ( क्रिस्तु–७७९–८१३ ) सभापतिपदमलमकार्षीद्यस्य च विदुषो लक्षं दीनाराणां प्रत्यहमभूद्वेतनम्[1] । न चेदमनतिविस्रम्भणीयं यद्विमर्शकाः प्रत्यभिजानन्ति तमेवामुं जयापीडसभापतिं भट्टोद्भटं काव्यालङ्काराणां सारसङ्ग्रहस्य प्रणेतारम्[2] । यतोऽयमुद्भटः काव्यालोकप्रणेत्रा ध्वनिवादप्रथमाचार्येणानन्दवर्धनेन नैकवारन्नाम्ना सबहुमानमनूद्यते[3]। स चायमानन्दवर्धनः कल्हणमुखेनैव निवेद्यते भट्टोद्भटपालयितुर्जयापीडात्प्रायः पञ्चचत्वारिंशतो हायनानामन्ते कृतप्रजापालनस्य काश्मीरकावन्तिवर्मभूपतेः ( क्रिस्तु–८५५–८८४) समसमय इति[4] । न हि तत्पूर्वे केऽपि निबन्धारो दृश्यन्ते भट्टोद्भटं नाम्नाऽर्थेन वा स्मरन्तः यद्यपि बहुलं तदर्वाचीनाः समुपलभ्यन्ते कृतपरिचया भट्टोद्भटप्रणीतप्रबन्धेषु ।

अन्यदपीदमनुल्लङ्घनीयं प्रमापकं यदस्य भामहानुयायित्वं भामहालङ्कारविवरितृत्वं च। येन नायमुद्भट आनन्दवर्धनात्प्रागतिविप्रकृष्टायां कालेयत्तायां सम्भावयितुं पार्यते । अन्तरा च भामहानन्दवर्धनयोः संभवति काव्यालङ्कारसारसङ्ग्रहप्रणेतर्युद्भटे नास्ति विशेषतः कश्चिद्बाधलेशो यदि कल्हणनिर्दिष्टेनोद्भटेनैतस्य प्रबन्धुः प्रत्यभिज्ञायमानता। भामहः किल साहित्यकलाकलयितृषु यावदुपलम्भं प्रथमतम इति प्रायोवादस्तथापि नाद्यावधि तदीयो जीवितसमय

---

१. राजतरङ्गिणी ४. ४९५.   २. जि. बूल्हर्, काश्मीररिपोर्ट.

३. ध्वन्यालोकः पु. ९६,१०८.   ४. राज-तरङ्ग. ५,३४.

इदन्तया निर्देश्यतामवाप । सम्भाव्यमानाच्च भामहसमया (क्रिस्तु-५००-६००) दानन्दवर्धनः वत्सराणां त्रिशत्यन्तरितायां कालपरिमितावासीदिति तदन्तरा सम्भवन्नयमुद्भटः तृतीयोद्भटप्रत्यायकप्रमाणान्तरोपलम्भं यावज्जयापीडसभापतेर्नान्य इति निर्धारणं नितरां युज्यते ।

इदञ्च साशङ्कनिर्धारणं न सर्वथा निर्मूलम् । सन्ति खलु बहवो ग्रन्थकाराः ये भट्टोद्भटस्य भामहविवरणममुं च सङ्ग्रहमनुवदन्ति । सन्ति चान्ये बहवोऽनुवादाः केवलमुद्भटनामाङ्किताः। ये किल प्रकृतालङ्कारग्रन्थयोरन्तर्भूततया सम्भावयितुमपि न पार्यन्ते[1]। द्विरूपेषु चैतेष्वनुवादेषु समुच्चित्य दृश्यमानेष्वेतत्तु संभावनीयं भवति यदेतदुद्भटप्रणीतोऽन्यो वा ग्रन्थो नाट्यवेदविवृतिपरः समभूदन्यो वा कश्चिदुद्भटसनामा नाट्यवेदविवरणादिकमरचयद्यत्रैतेऽर्वाचीनानामनुवादाः संवादं लभेरन्निति ।

इदञ्च वक्ष्यते समनन्तरविभागे समुचितनिदर्शनैर्यदुद्भटोपरचिता काचिन्नाट्यशास्त्रविवृतिरितराभ्योऽपि चिरन्तना संबभूव। सा चान्तरा कांश्चनानुवादान्न स्वरूपतोऽद्य वरीवर्तीति । काव्येषु शब्दार्थालङ्कारसङ्घटनस्यैव प्राधान्येन कविप्रतिभासंरंभगोचरत्वमूरीकुर्वतः शृङ्गारादींश्च रसान् गुणीभूय रसवदाद्यलङ्कारेष्वन्तर्भावयतो भामहस्य समयानुयायी प्रकृतप्रबन्धप्रणेता सोऽयं भट्टोद्भट एव किं रसोद्रेकसंप्लावितकविहृदयात्समुद्भूतस्य रसमयं च जीवलोकमातन्वतः सरस्वतीनिष्यन्दस्य काव्यतामुररीकुर्वतो भरतस्य नाट्यशास्त्रं विवृणुयात् ? ।

अथवा युज्यत एवेदम् । यतो भामहादयः श्रव्यस्यैव काव्यस्यालङ्कारप्राधान्यं रसानामप्यलङ्कारभावं नाट्यादिषु च दृश्यप्रबन्धेषु रसमयतां कविवाङ्मयस्य व्यवास्थिषत[2]। न चापश्यन्नुभयत्र रसस्थितेरैकरूप्यम् । अतएव "नव नाट्ये रसाः स्मृताः" (का. सा. सं. ४-५) इति निर्दिशन्नुद्भटोऽपि दशरूपकेतरस्मिन् काव्यप्रपञ्चे रसवदादीनालङ्कारतामभ्युपगच्छन्नभिव्यनक्ति नाट्येषु रसानां प्रधानभावम् । अतएव चोद्भटसमनन्तरभाविनौ

---

१. काव्यमीमांसा. पु. २२;४४. व्यक्तिविवेकटीका. पु. ४. दशरूपकम्. २, ६१. भावप्रकाशनम् पु. १२. प.६. अभिनवभारती–अध्याय. ९. 'पञ्च प्रचारास्तस्ये'ति भट्टोद्भटः पठति । अध्याय. १८ नैव प्रयोज्यान्युद्भटः पठति 'स्रग्धरादीन्येव प्रयोज्यानि नाल्पाक्षराणि' इति स व्याचष्टे । अध्याय. ६. पु. २६६. प. ७. एवमादयः ।

२ भामहालङ्कारः. २. २४. दण्डी. १. ३९.

रुद्ररुद्रटावपि[1] श्रव्यकाव्येषु रसानां शब्दार्थयोरलङ्कारतां केवलं संभावयतो भामहादींस्तिरस्कृत्य दशरूपकेष्विव तदितरेष्वपि काव्येषु शरीरभूतशब्दार्थयो रसमयतां रसोपप्लुतकविहृदयान्निर्गच्छत एव वचोनिष्यन्दस्य काव्यत्वं तत्रैव कविव्यापारपर्यवसानं च प्रतिजानीतः[2]। अत एतादृशं संभावनं न सर्वथाऽनुपपन्नं यदयमुद्भटो दृश्यश्रव्यशब्दार्थयुगलस्य क्रमेणाविप्रतिपिद्धौ रसालङ्कारप्राधान्यवादौ भरतभामहोपज्ञावनुसृत्य प्रबन्धद्वयं नाट्यवेदकाव्यालङ्कारविवरणपरं प्रणिनाय। स चोद्भटान्तरोपलम्भं यावन्नान्योऽपि भवितुमर्हति भामहानन्दवर्धनयोर्मध्यकालभवाज्जयापीडसभापतेर्भट्टोद्भटादिति। प्रत्यभिज्ञायमाने चास्मिन्नुद्भटे कल्हणनिर्दिष्टजयापीडसभापतौ जयापीडस्य काश्मीरशासनकाल एवास्यापि वैदुष्यविस्फूर्जितस्य समय इत्ययुतसिद्धमिदम्। यथा कल्हणश्च जयापीडः क्रिस्तु ७७९–८१३ तमसंवत्सरेषु काश्मीरप्रदेशान् प्रशशासेति स एवास्यालङ्कारनिबन्धनस्यापि प्रणेतुः समय इत्यभ्युपेयम्।

———

## तत्समानकालिकाः प्रबन्धारः।

——:०:——

काश्मीरांश्च जयापीडे प्रशासति सम्बभूवुर्बहवः कवयो मन्त्रिणश्च तदाश्रिताः यथा कल्हणो निर्दिशति राजतरङ्गिण्याम्[3]। तेषु चायमुद्भटः सभापतिरासीत्। तथा कवयो मनोरथशङ्खदत्तचटकसन्धिमन्तः मन्त्रिणश्च वामनप्रभृतयः समासन्। एषु च विना वामनमन्येषां कवीनामुद्भटसमकालिकानां परिचायकं प्रमाणान्तरमद्य यावन्नोपलभ्यते। काव्यालङ्कारसूत्राणां वृत्तेश्च प्रणेता वामनः स एव यो जयापीडामात्यो बभूवेति काश्मीरकपण्डितादृतैतिह्यावलम्बेन चिराय विमर्शकमहोदयैर्निरधारि[4]। सन्ति चैतदुपष्टम्भकानि प्रमाणान्तराणि यतोऽयं भवभूतिराजशेखरयोः क्रिस्त्वष्टमदशमशतकभवयोर्मध्यकालिक आनन्दवर्धनादपि संभावितपूर्वभावः।

परन्त्विदमत्र समालोचनीयं भवेद्यदसौ दण्डिनं भूयसाऽनुसरन् भामहोद्भटादृतस्यालङ्कारप्रधानकाव्यवादस्य सर्वथा हस्तावलम्बमनारचयन् नूतनस्य च रीत्यात्मककाव्यवादस्य गौडीवैदर्भीव्यतिरेकिपाञ्चालीरीतेश्च

---

१. एकस्यैव नामभेदमात्रमिदमिति बहवः। २ शृङ्गारतिलकम्. १.९, ९. रुद्रटालङ्कारः १२. १, २. ३. राजतरङ्गिणी ४.४९७. ४. जि. बूह्लर काश्मीररिपोर्ट. पृ.६९.

भामहादिभिरनादृतायाः समादरं प्रदर्शयन् किं काश्मीरको भवितुमर्हति उत दण्डिवदकाश्मीरिको भवेदिति ।

उद्भटसमकालिकोऽप्ययं न सर्वथोद्भटं स्मरति । अपरश्च कुट्टनीमत-प्रणेता दामोदरगुप्तः भट्टोद्भटसमकालो जयापीडसभायामासीदिति कल्हण एव कथयति[1] ।

## तत्प्रणीताः प्रबन्धाः

——:०:——

अन्तरा च तमिमं काव्यालङ्काराणां सारसङ्ग्रहं भट्टोद्भटप्रणीतो नान्यो ग्रन्थोऽद्य यावदुपलब्धिपथं प्राप । वामनदामोदरगुप्तादीनां समसमयः मनोरथादीनां कविवराणां समाजपतिः काव्यगोष्ठीप्रवर्तकभावकपरीक्षकाणां काश्मीरमहाराजानामन्यतमस्योपजीवी सभापतिपदाभिषिक्तः प्रत्यह-दीनारलक्षवेतनार्हो भट्टोद्भटः तादृशि च कविनिर्मितभारतीबहुले कविक्रिया-शिक्षणदक्षे च कालविशेषे लब्धात्मलाभः प्रकृतमेकमेव प्रबन्धं प्रणिनायेति किं केनापि पार्यते कल्पयितुम् । निपुणं तु निरूप्यमाणे प्रतीहारेन्दुराजोल्लि-खितं[2] बहुभिश्चाभिनवगुप्तादिभिरंशतोऽनुपदमनूदितं[3] भामहकाव्यालङ्कारवि-वरणं तथा कुमारसंभवाख्यमन्यत्काव्यञ्च प्रतीहारेन्दुराजेन प्रकृतव्याख्यात्रा च निर्दिष्टं[4] भट्टोद्भटेन प्रणीतमिति निर्धारयितुं शक्यते । अस्मादेव च कुमार-सम्भवकाव्यादेकदेशभूतोऽनुगतः श्लोकसन्दर्भः सप्रयत्नं यथोद्देशमलङ्काराणा-मुदाहरणतया विनिवेश्यायमलङ्कारसङ्ग्रहः सङ्कटितो दृश्यते ।

रमणीयतममिदं काव्यमेकदेशेन केवलंकाव्यालिङ्गायमानेन बहिरवतीर्ण-मंशान्तरेण च सर्वथा लुप्तं पठितॄणां पीडां प्रीतिं च तनोति । विना च कांश्चन श्लोकानलङ्कारोदाहरणीभावाय केवलं कल्पितकठिनविकृतपदसन्दर्भान् प्रायः सर्वेऽप्यन्ये श्लोका अतिमृदुलया स्फुटार्थया गम्भीरया च शैल्या सुनिवेशिता इतीदमसंशयं वश्यवाचं कविमुद्भटं प्रज्ञापयति । अत एवार्वाचीना बहव आल-ङ्कारिका उचिततमानिमानेव श्लोकानात्मनः प्रबन्धेषु निर्विशङ्कं योजयन्ति स्म । तत्तदलङ्कारोदाहरणभावमपन्हूय समुच्चयेन पृथक्कृत्य पठ्यमानाश्च त इमे श्लोकाः कस्य वा सहृदयस्यादिकवेः शरद्वर्णनं सीतावियोगानुतापिरामविलापांश्च न स्मारयेयुः । सत्यमिदं यत् कालिदासस्यायमेव कथाभागः तदीयकुमार-

१. राजतरङ्गिणी. ४–४९६.

२. लघुवृत्तिः १. २७. ३. लोचनम् पु. १०,४०,१९९. ४. का. सा. सं. १,३१

संभवे समावेशितोऽन्यामेव शोभां पुष्णातीति। नैतावतोद्भटस्य स्वतन्त्रप्रतिभोद्भूतकल्पनामयं गौरीशङ्करमनोभाववर्णनमल्पेनाऽप्यंशेन कालिदासकलनातः कनीयसीं स्थितिं भजेत यदि न भवेदुत्कर्षाय ।

सूक्ष्मेक्षिकया तु समीक्ष्यमाणे उद्भटवर्णनं ततोऽपि किञ्चिदुत्कर्षमेव पुष्णाति । तपस्यन्तीं गौरीमुपसर्पन् हरः कालिदासेन केवलं भावशून्यः समुचितविभावादिभिरनुद्दीपितमनोभवः आलम्बनगुणभावनावेशरहितः निष्कारणप्रतिपन्नवटुभावोऽननुभूतासह्यवियोगदुःखोऽननुतप्तकामदहनापराधोऽनन्यसाधारणानुरागावेशेन तपःक्लेशेनापि सुकुमाराण्यङ्गानि क्लेशयन्त्या उत्तमनायिकायाः पुरतः सावष्टम्भमुपतिष्ठन् शठपुरुष इव भावुकानां पुरतः समुपह्रियते। कामदहनात्पूर्वं सविशेषमात्मनि प्रकाशिते भक्त्यतिशये पुनरतिशयिततपोबलेनात्मनोऽर्थे क्लिश्यन्तीं सखीमुखेन प्रकाशितमनोभावामात्मन्यतुलानुरागावेशापहृतां सुकुमारीं गौरीं जानन्नेव पुनस्तस्या भावं दूषणगणैस्तुदन्नुत्कृष्टनायकसमुदाचारमननुवर्तमानः शङ्करः केवलं सहृदयानां वैरस्यायैव कल्पते।

उद्भटस्तु प्रतिभानवानिमानंशानन्यथयितुमिवादित आरभ्य शङ्करस्य सतीशोकानलोपरमं शरत्प्रभावेण मनोभवोद्दीपनं स्वानुष्ठितापराधानुशोचनपूर्वकं नायिकागुणगणस्मरणं तदुद्दीपितकन्दर्पप्रबलपीडापारवश्येनोद्वेगप्रलापोन्मादाख्यवियोगावस्थानुभावनं चण्डालकल्पस्यात्मनो निर्निमित्तकामदहनोत्तरतिरोभावेन समुपजातनिरतिशयनैराश्याऽस्थाननिवेशितानुरागामात्मानं निन्दन्ती मरणायापि कृतसङ्कल्पा गौरी किं पुनरप्यात्मन्यनुरज्येतेति तस्या भावपरीक्षायै साकूतं वटुवेषविन्यसनं नायिकादर्शनेनानुरागानुभावानां सपरिकरं न्यसनं तद्रूपातिशयवर्णनं पुरस्कृत्य तस्या भावावगमाय वैकुण्ठादीनां गुणवर्णनेनात्मन्यनुरागदार्ढ्यावगमनञ्चेतीमानर्थान् साभिसन्धि घटयन्नुत्तमनायकयोः समुदाचारं मात्रयाऽप्यस्खलितमनुसरन्नतिमात्रं समुचितविभावादिविन्यासेन रसपरिपोषं पालयन् कालिदासं विशिनष्टीति सचेतसः परामृशन्तु।

तृतीयस्तूद्भटप्रणीतो निबन्धो भामहालङ्कारविवरणरूपः कुमारसम्भवादप्यल्पैरप्यंशैर्बहिरवतीर्णः स्वरूपतो नाद्याप्युपलब्धः। उपलभ्यमानैश्चानुवादांशैरेतावत्तु वक्तुं पार्यते यदसौ प्रबन्धोऽतितरां तथा प्रौढो विस्तृतश्च यथा काव्यालङ्कारसारसङ्ग्रहस्तस्यैव ग्रन्थस्य किञ्चिन्न्यूनातिरेकपरिष्कारेण सङ्क्षिप्ताकार इति वक्तुं शक्यते इति । आनन्दवर्धनादिभिर्बहुभिरनुपदमनूद्यमानञ्च तदेव विवरणं प्रकृतग्रन्थादपि समग्रतयाऽलङ्कारप्रपञ्चे भट्टोद्भटसम्मतानां सर्वेषामर्थानां प्रकाशकमासीदित्यपि विभावयितुं शक्यते। न खलूद्भटोऽन्ध इव सर्वा-

त्मना भामहमनुयाति यद्यपि तस्य व्याख्याता। भिद्यते ह्यसौ बहुष्वर्थेषु भामहात् । ते च यदा प्रकृतग्रन्थेऽपि तत्र तत्र निरदिश्यन्त कुतो न भवेयुर्बहुलं तद्विवरणे। अत एवासौ ध्वनिकारादिभिरलङ्कारविषयेषु स्वतन्त्रविचारप्रवर्तयितृत्वं काव्यक्रियाशिक्षणपाटवं चाभिद्योतयद्भिः तत्रभवत्, चिरन्तनालङ्कारकार, अलङ्कारतन्त्रप्रजापतीत्यादिविशेषणैर्विशिष्य सगौरवातिरेकं निरादिश्यत[1]। न हि प्रकृतालङ्कारसङ्ग्रहं केवलं भूयसा भामहोक्तार्थानुसारिणं विलोकयतां पूर्वोक्तासाधारणविशेषणाहितपूज्यभावस्यासौ भाजनमिति प्रतिभायात् । अतो भामहमनवष्टभ्य स्वतन्त्रा बहवोऽर्थाः स्वीयमताभिद्योतकाः यत्र विवरणे भट्टोद्भटेन सन्निवेशिताः तच्चाद्यास्माकमुपलम्भपथान्निर्गलितमिति सत्यं शोचनीयता प्रभवति ।

चतुर्थश्चोद्भटप्रणीतो ग्रन्थः नाट्यशास्त्रव्याख्यारूपः कश्चिद्भवेदिति मनागादावावेदितम् । सङ्गीतरत्नाकरप्रणेता शार्ङ्गदेवः भरतव्याख्यातॄन्नामत उल्लिखन् उद्भटं तेषु लोल्लटादनन्तरं निर्दिशति[2] । लोल्लटादयो व्याख्यातार इति चाभिनवगुप्तस्य रससूत्रव्याख्यायां तेषां मतानुवादविस्तरेण सम्भाव्यते । अभिनवभारत्यां चोद्भटादृताः पाठभेदाः तदनुगुणा तदादृता व्याख्या च नैकशो निर्दिश्यमाना अमुमर्थं द्रढयन्ति[3] । क्वचिच्चोद्भटादृतं कञ्चिदर्थं निर्दिश्य लोल्लटस्य तत्रैव वैमत्यं प्रदर्शयन्नभिनवगुप्तः लोल्लटादपि प्राथम्यमुद्भटव्याख्याया अभिसन्धत्ते[4] । वक्रोक्तिजीविते च रसवदादीनामनलङ्कारत्वमलङ्कार्यत्वं च रसानां निरूपयन् कुन्तकः उद्भटादृतमूर्जस्विनमलङ्कारं प्रतिक्षिपन्नमुं भरतनयनिपुणमानसं निर्दिश्य परिहसति रसात्मतावादिनस्तस्यैवैते रसवदादयोऽलङ्कारा अपि सम्मता इति । इदञ्च कुन्तकनिर्देशनं भरतशास्त्रव्याख्यातुरेवोद्भटस्यालङ्कारविवरणे रसवदादीनामलङ्कारत्वाभ्युपगमं विभावयदेकस्यैवोद्भटस्य प्रबन्धद्वयप्रणेतृत्वं व्यञ्जयति ।

अन्यच्चोद्भटस्य नाट्यशास्त्रव्याख्यातृत्वानुमापकं वचनं दशरूपकादिषु नाट्यप्रबन्धेषु दृश्यते । यथा भरतं रसमयस्य काव्यस्य मातृस्थानीया वृत्तयो भारत्याद्याश्चतस्रो निर्दिशन् धनञ्जयः उद्भटानुयायिभिरूरीक्रियमाणां पञ्चमीं

---

१ ध्वन्यालोकः पु. १०८. अलङ्कारसर्वस्व. पु. ३. व्यक्तिविवेकटीका. पु. ३.

२. सङ्गीतरत्नाकरः. १.१.१९.३. अभिनवभारती. अध्याय. ९. पञ्च प्रचारास्तस्येति भट्टोद्भटः पठति। अध्याय १८. श्लो. १२२. नैव प्रयोज्यान्युद्भटः पठति। स्रग्धरादीन्येव प्रयोज्यानि नाल्पाक्षराणीति स व्याचष्टे। ४.अ. भारती. अध्याय. ६.पु.२६६. प.७.

५. व. जी. पु. १७१.

वृत्तिचतुष्टयसमावेशरूपामर्थवृत्तिमुपक्षिप्य 'नार्थवृत्तिरतः परे'ति निषेधति तन्मतम्[1]। इमाश्च चतस्रो वृत्तयः दशरूपकमातृत्वेन भरतसम्मताः दशरूपकनिरूपणपरे प्रबन्ध एव निवेशं लभमानाः उद्भटस्य नाट्यविषयेऽपि प्रबन्धृत्वमनुमापयन्ति। न हि पूर्वोक्तप्रबन्धत्रय्यामर्थवृत्तेः पञ्चम्या उद्भटेनोपक्षेपणसम्भावनमौचित्यमावहेत्। भोजोऽपि शृङ्गारप्रकाशे[2] औद्भटमेव मतं मनसि निधाय पञ्च वृत्तयो दशरूपकोपयोगिन्यः प्रतिज्ञाय पञ्चमीमपि मिश्राख्यामर्थवृत्तिं लक्षयति यद्यपि सेयं भरतेनानुद्दिष्टा धनञ्जयेन चोद्धाव्य प्रतिक्षिप्ता। उभयमपीदं धनञ्जयभोजयोर्मतमुद्भटाभिमतपञ्चमवृत्तिविषयकं समुच्चित्य शारदातनयः भावप्रकाशने प्रदर्शयति[3]। एभिश्च प्रमाणजातैरुद्भटस्य नाट्यशास्त्रव्याख्यातृत्वं सम्भाव्यमानं तावता दार्ढ्यं भजेत यावता कुतश्चित्स एव ग्रन्थः समुपलभ्येत।

यदा चोद्भटस्य नाट्यवेदप्रथमव्याख्यातृत्वं काव्यालङ्कारेषु स्वतन्त्रप्रबन्धप्रणेतृत्वं काव्यकलाकौशलं च चतुर्ष्वप्येतेषु पूर्वोक्ततदीयप्रबन्धेषु विभाव्यते न तदा कैश्चिद्विमर्शकैरुद्भाव्यमाना[4] भूयसा भामहानुयायिनोऽल्पतमस्यालङ्कारसारसङ्ग्रहस्य प्रणेतर्युद्भटे जयापीडनरपतिसम्मानना, प्रत्यहदीनारलक्षवेतनं कविपण्डितसभापतिभावश्च कथमुपपद्यतामित्येवंरूपा शङ्का पदं भजते।

---

## २. काव्यालङ्कारसारसङ्ग्रहः।

### प्रबन्धोद्देश्यम्।

यथाऽभिधानश्चायं ग्रन्थः प्राचीनैरालङ्कारिकैरुद्भावितेषु काव्यालङ्कारेषु सारभूततयोद्भटेन विभावितानां केषाञ्चिदेव सङ्गृह्य प्रदर्शनपरः न सर्वेषामेव तेषाम्। षड्भिः वर्गैः विभक्ता अपीमे काव्यालङ्काराः प्रतिवर्गं निरूप्यमाणेष्वलङ्कारेषु न कञ्चनापि क्रममनुसृत्य निर्दिष्टा दृश्यन्ते। परन्तु भामहेनेव 'परे' 'अन्ये' इत्येवमादिभिः शब्दैरेकैकवर्गान्तर्गतानामलङ्काराणां निर्देशेन तत्तद्वर्गान्तर्गता अलङ्कारा एकैकेनाथवा एक-

---

१. दशरूपकम्. २,६१. २. प्र. १२. पु. १७४. ३. पु. १२, ६–७.
४. जि. बूह्लर काश्मीररिपोर्ट.

जातीयैर्बहुभिरुद्भाविता भवेयुरिति परमभ्यूहितुं पार्यते। न तु क एते कुत्र वा तैरेतादृशा अलङ्कारा निरदिश्यन्तेत्येवमादिकं किञ्चित्सप्रमाणं वक्तुं शक्यते।

अन्यच्चात्रेदं वैलक्षण्यं यदलङ्काराणां लक्षणसमुद्देशौ विहाय नान्यः कश्चिदर्थोऽत्रोद्भटेन न्यरूपि। भामहदण्डिवामनादयः किलेदंशास्त्रप्रबन्धारः नैतावता तृप्यन्ति स्म। परन्तु काव्यस्वरूपं तस्य चालङ्कारैराधीयमाना शोभा गुणदोषचर्चा काव्यात्मभूतार्थनिर्धारणं शब्दसाधुत्वमेवमादिका बहवोऽर्थाः काव्यालङ्कारानुबन्धिनो निबद्धा भामहादिभिः। भट्टोद्भटेन भामहालङ्कारविवरणे काव्यालङ्कारभूता इमे रीतिगुणदोषहानादयः काव्यशोभाधायका धर्मास्सप्रपञ्चं प्रतिपादिता इतीवास्मिन् प्रबन्धे काव्यालङ्कारभूतेषु बहुषु सारभूतानां शब्दार्थालङ्काराणामेव पृथङ्निरूपणार्हतां मनस्याकलय्यालङ्काराः केवलं समगृह्यन्त।

सामान्यतो विलोक्यमानश्चायं प्रबन्धः सर्वथा भामहानुयायितां ग्रन्थकर्तुर्निरूपयति। यतोऽत्रापि भामहप्रबन्ध इव षट् परिच्छेदाः। स्वीयानामेव पद्यानामुदाहरणीकरणम्। लक्षणेष्वपि बहुलमेकता। अलङ्कारसङ्कलनक्रमोऽप्यनत्यन्तविलक्षणः। न चैतावताऽर्वाचीनैः ध्वनिकारादिभिरद्य यावदारोप्यमाणा अलङ्कारतन्त्रप्रवर्तकभावस्वतन्त्रविचारनिर्वाहदाक्ष्यचिरन्तनालङ्कारिकोचितादरादयो गुणविशेषा उद्भटेऽस्थानकल्पिता भवितुमर्हन्ति। मुख्यश्च मूलमत्र न विशिष्य गवेषणीयं भवति। भामहः किल काव्यं रचयतः कवेर्बहूनर्थाननुसर्तव्यान् साभिनिवेशं निरूपयति। न कस्यचित्तत्र प्राधान्येन विशेषं प्रख्यापयति। अलङ्कारांश्च पूर्वपुरुषोद्भावितान् स्वमतिपरिकल्पितांश्च प्रायशोऽननुबन्धनिबद्धेषूदाहरणेष्वनतिविस्तरमस्फुटश्च प्रतिजानाति। काव्येष्वलङ्काराणामेव प्राधान्यश्च न विशेषतो निरूपयति।

उद्भटस्तु भामहालङ्कारविवरणेनालङ्काराणामेव काव्यालङ्कारेषु सारतां बुद्ध्वा सविशेषमुद्देशलक्षणविभजनादिभिः यावदुपलम्भं तेषां प्रभेदान् सूक्ष्मेक्षिकया विभाव्य तानेव स्वकृतकुमारसम्भवकाव्यैकदेशे कथाभागस्याविक्षेपेण पूर्वालङ्कारिकसम्मतालङ्कारक्रमस्य चाविरोधेन निवेश्यालङ्कारप्रधानकाव्यस्यातिसुन्दरतां रमणीयकाव्यकरणेन द्योतयन् गुणानां रीतीनाञ्च प्राणात्मताभिमानिनौ दण्डिवामनावतिशयानः शब्दार्थालङ्काराणां शब्दसङ्घटनाविशेषात्मकगुणानां रसप्रधानोक्तीनाञ्च काव्यालङ्कारेष्वन्तर्भावमभिसन्दधदुक्तालङ्कारेष्वेव काव्यशोभाधानाय कवीनां दृष्टिमुपसंहरन्-

लङ्काराणामेव काव्येषु प्राधान्यवादिनो मतस्य सर्वस्वकारादिभिरुल्लिखितस्योत्तमं पदमध्यास्ते न भामहः। भामहोल्लिखितेष्वप्यलङ्कारेषु सविशेषं सप्रभेदं चास्य निर्देशनं रूपकानुप्रासोपमाश्लेषपुनरुक्तवदाभासदृष्टान्तकाव्यलिङ्गादिषु नूतनप्रभेदानामुपलम्भश्चालङ्कारविषये उद्भटेनापरिश्रमेणाद्रियमाणं स्वातन्त्र्यं विख्यापयति। विशिथिलतया च बहुभिः पूर्वतनैर्बहुधोद्भाविताnामविकसितकुसुमसधर्मणामनतिविशदमेव भामहेनैकीकृत्यापि निर्दिष्टानामलङ्काराणां निरपेक्षतया सविकासं सपरिकरं च निर्देशेनार्वाचीनानामलङ्कारप्रधानकाव्यवादादिमगुरुत्वेनोल्लेख उद्भटस्य नितरां सङ्गच्छते। भामहादृतानामपि केषाञ्चिद्यमकोपमारूपकोत्प्रेक्षावयवानामनलङ्कारभावः काव्यलिङ्गदृष्टान्तपुनरुक्तवदाभाससङ्कराणामलङ्कारकोटिनिक्षेपश्चोद्भटेन क्रियमाण एतस्य विशेषज्ञतां बोधयति। अन्यादृशः समाहितालङ्कारः सविशेषरसवदाद्यलङ्कारः शान्तस्य च नवमनाट्यरसस्य काव्येषु रसवद्रूपेण संयोजनस्येदम्प्रथमतया कल्पनक्रमश्च विशेषतयोद्भटग्रन्थे केवलमवधेयाः। मम्मटालङ्कारसर्वस्वकारादयोऽपि विशेषतोऽलङ्कारस्वरूपविवेचननिष्णाता उद्भटमेव भूयसाऽनुसरन्तो बहुत्रेदम्प्रथमान्येव लक्षणान्यूरीकुर्वन्तीति नातीवात्र निवेदनीयम्।

---

## पूर्वप्रबन्धेभ्योऽस्य वैलक्षण्यम्।

रामायणमहाभारतादिषु पुरातनप्रबन्धेषु पाणिनिबादरायणादिप्रणीतेषु च सूत्रात्मकनिबन्धनेषूपमादीनामलङ्काराणां विनियोजनं विशेषतो दृश्यमानं चिरन्तनादेव कालाच्छब्दार्थानां संस्कारा इवालङ्कारा अप्यौत्पत्तिका आसन्नित्येव प्रत्याययति। व्यवहारेषु संस्कृतशब्दानामिवालङ्कृतशब्दानामप्युपयोग उत्कर्षाय भवतीति संस्कारप्रदर्शनाय व्याकरणादिदर्शनानीवालङ्काराणां प्रदर्शनाय पृथग्दर्शनान्यपि काव्यालङ्कारनिर्णयपराणि पुरातनेऽपि काले समासन्नेवेत्यनिच्छताऽप्यभ्युपेयम्। तानि तु व्याकरणादीनीव नाद्योपलभ्यन्त इत्येव विषादस्थानम्।

उपलभ्यमानेषु च प्रबन्धेषु भरतप्रणीततयोल्लिख्यमाने नाट्यशास्त्रे चतुर्णामलङ्काराणामुपमादीपकरूपकयमकाख्यानां काव्येष्वलङ्कारभावो निरदिश्यत। इमे च रसप्रधानस्य नाटकादेरभिनेयकाव्यस्यालङ्करणाय भरतेन निर्दिष्टाः। एतेन च न श्रव्यकाव्येष्वप्येतेषामेव चतुर्णामलङ्कार-

भावो भरताभिसंहित इति परिसङ्ख्यातुं पार्यते। रामायणादिषु प्राचीन-प्रबन्धेष्वन्येषामपि बहुलमलङ्काराणामुपलम्भात्। न हीदमपह्नोतुं शक्यते यद्-भिनेये रसमये काव्ये तावतामलङ्काराणां विनियोगस्सम्भवन्त्रसाविरोधी न भवेद्यावतामनभिनेये श्रव्ये काव्ये। अत एव रसाविरोधिनां कतिपया-नामेवालङ्काराणां भरतशास्त्रनिर्देशः।

भरतादनन्तरं चालङ्काराणां श्रव्यकाव्योपयोगिनां पृथङ्निर्देशाय प्रवृत्तो भामहग्रन्थ एवाद्योपलभ्यते यद्यपि तत्र प्राचीनतमा मेधाविप्रभृतयो बहवो निर्दिश्यन्ते। तत्र चैकोनचत्वारिंशदलङ्काराः निरदिश्यन्त। परिच्छे-दानामन्ते च "स्वयं कृतैरेव निदर्शनैः" "गिरामलङ्कारविधिः सविस्तरः स्वयं विनिश्चित्य मया धियोदितः" "इति निगदितास्तास्ता वाचामलङ्कृतयो मया बहुविधकृतीर्दृष्ट्वाऽन्येषां स्वयं परितर्क्य च" "अवगम्य स्वधिया च काव्य-लक्ष्म" इति निर्दिशन् भामहः बहूनामलङ्काराणामात्मनैवाभ्यूहिततां लक्षण-निदर्शनानां च स्वयं रचिततां सत्यं द्योतयति। यद्यपि क्वचिदलङ्कारोद्देशेषु "अन्ये" "केचित्" "अपरे" इत्यादिकं तेनैव निर्दिश्यते न तावता सुपरिष्कृतानि लक्षणान्यपि तेषां भामहात्पूर्वमासन्निति सनिर्बन्धं वक्तव्यम्। अतोऽसावेव भामहः काव्यालङ्कारकारेषु प्राचीनतम इति सम्भावयितुं पार्यते। दण्डी तु काव्यादर्शे "पूर्वशास्त्राणि संहृत्य" "सूरयः। वाचां विचित्रमार्गाणां निबबन्धुः क्रियाविधिम्" "तैः शरीरं च काव्यानामलङ्काराश्च दर्शिताः" "किन्तु बीजं विकल्पानां पूर्वाचार्यैः प्रदर्शितम्। तदेव परिसंस्कर्तुमयम-स्मत्परिश्रमः" इत्यादि निर्दिशन् भामह इव साभिनिवेशमलङ्काराणामात्मोपज्ञ-तामनाविष्कुर्वन्नात्मनो भामहोत्तरत्वं सम्भाव्यमानं सहते। सत्स्वपि बहुषु भामहदण्डिपौर्वापर्यविप्रतिपत्त्युपष्टम्भकप्रमाणेष्विदमपि तदुपकारि भवेदिति सम्भावये।

इमौ च काव्यलक्ष्मप्रणेतारौ। न केवलमलङ्काराणां गुणरीति-दोषहानादिव्यतिरिक्तानामनुप्रासोपमाद्यात्मकानां निरूपणमेवैतयोरुद्देश्यम्। दोषहानगुणोपादानादयस्सर्वेऽप्यलङ्कारव्यपदेश्या एतयोर्दृष्टौ नोपमादय एव। कविना च क्रियमाणे सत्काव्ये यान्यवश्योपादेयानि तेषां सर्वेषां काव्या-लङ्कारभावापादनमेतयोरनतिविरुद्धम्।

भट्टिस्त्वपरः कविः भामहदाण्डिनीर्दिष्टानेवालङ्कारान् प्रायशोऽभिसन्धाय तेषामेवालङ्काराणां निदर्शनदानाय प्रसन्नं नाम काण्डमेकमात्मनः काव्ये नियुयोज । शब्दलक्षणानामुदाहरणयोजनमेव स्वकाव्यस्य मुख्योद्देश्यं सङ्कल्पयन् भट्टिः तादृशामेव शब्दार्थालङ्काराणामपि निदर्शनदानाय प्रवृत्त इति तु युक्ततरमेव । तत्र च यथा पाणिनिप्रणीतव्याकरणावलम्बेन प्रवृत्तिरेवमत्रापि काव्यालङ्कारलक्षणपरं कञ्चन निबन्धमनुसरन्नेव निदर्शनानि रचयामासेति कल्पयितुं सुशकम् । अनतिविप्रलम्भश्च भामहमर्थालङ्कारेषु दण्डिनं शब्दालङ्कारेषु क्रमेणानुसरति भट्टिकाव्यमिति तयोरेवोदाहरणीभावाय पद्यानि भट्टिः प्रणिनायेति कल्पनं न क्लिष्टतमम् । अतएव भामहस्य—

'काव्यान्यपि यदीमानि व्याख्यागम्यानि शास्त्रवत् ।
उत्सवः सुधियामेव हन्त दुर्मेधसो हताः ॥' ( २-२० )

इति वचनमनुसृत्येव 'व्याख्यागम्यमिदं काव्यमुत्सवः सुधियामलम्' ( २२-३४ ) इति तत्काव्यस्य चान्तिमं वचनं सङ्गच्छते । षष्ठशतकान्ते श्रीधरसेनमहाराजसमसमयाच्च भट्टिकवेः पूर्वं भामहदण्डिनोः सद्भावसम्भावनं न कस्यापि युक्तिलेशस्य विरोधि । दिङ्नागस्य प्रत्यक्षलक्षणमनुवदंश्च भामहः चतुर्थशतकोत्तरन्तु भवितव्यः । धर्मकीर्तेश्च तदेवाननुमन्यमानस्स एव न षष्ठशतकादर्वाचीनः । दण्डी च षष्ठशतकात्पूर्वभव इति बहुविमर्शकसम्मानित इतीदमपि भट्टिकाव्यात्पूर्वभावमेव द्योतयति भामहदण्डिनोः ।

उद्भटस्तु काव्यालङ्कारसारं सङ्गृह्णन् गुणदोषहानरीतिप्रभृतीन्पूर्वालङ्कारिकसम्मतकाव्यालङ्कारान् परित्यज्य सारभूतान् पुनरुक्तवदाभासादीन् काव्योपयोगिनो निर्दिशतीति सर्वं भवत्यलङ्काराणामेव काव्ये प्राधान्यं तत्रैव च कविनाऽवहितेन भवितव्यमिति वादस्यार्वाचीनालङ्कारिकैरुद्भट्टङ्कितस्य मूर्धन्यकोटिनिविष्टः न भामहदण्डिनौ ।

अलङ्काराणां नामनिर्देशे केवलं भामहदण्डिनोरुद्भटस्य च यद्यपि नातीव मतिभेदं पश्यामः तथापि तयोर्लक्षणविभजनानि कियदवधि भट्टोद्भटः परिष्कृत्य सप्रपञ्चं प्रदर्शयतीत्यधोनिर्दिष्टपट्टिका प्रकाशयेत् ।

| अलङ्कारः | भामहः | दण्डी | उद्भटः |
|---|---|---|---|
| १ अतिशयोक्तिः | एकरूपा | एकरूपा | चतुर्विधा |
| २ अनन्वयः | एकरूपः | असाधारणोपमा | एकरूपः |
| ३ अनुप्रासः | द्विरूपः | नास्ति | त्रिरूपः |

| अलङ्कारः | भामहः | दण्डी | उद्भटः |
|---|---|---|---|
| ४ अपह्नुतिः | एकरूपा | एकरूपा | एकरूपा |
| ५ अप्रस्तुतप्रशंसा | ,, | ,, | चतुर्विधा |
| ६ अर्थान्तरन्यासः | एकरूपः | एकरूपः | चतुर्विधः |
| ७ आवृत्तिः | नास्ति | अस्ति | नास्ति |
| ८ आशीः | ,, | ,, | ,, |
| ९ आक्षेपः | द्विविधः | बहुविधः | द्विविधः |
| १० उत्प्रेक्षा | एकरूपा | एकरूपा | द्विविधा |
| ११ उत्प्रेक्षावयवः | अस्ति | उत्प्रेक्षान्तर्गतः | नास्ति |
| १२ उदात्तम् | द्विविधम् | द्विविधम् | द्विविधम् |
| १३ उपमा | त्रिविधा | बहुविधा | १७, विधा अथवा २१ विधा |
| १४ उपमारूपकम् | अस्ति | अस्ति | नास्ति |
| १५ उपमेयोपमा | ,, | ,, | अस्ति |
| १६ ऊर्जस्वी | अलक्षणः | विलक्षणः | रसाभासभावा-भासरूपः |
| १७ काव्यलिङ्गम् | नास्ति | नास्ति | नूतनम् |
| १८ छेकानुप्रासः | ,, | ,, | नूतनः |
| १९ तुल्ययोगिता | एकरूपा | विलक्षणैकविधा | अन्यरूपा द्विधा |
| २० दीपकम् | त्रिविधम् | बहुविधम् | त्रिविधम् |
| २१ दृष्टान्तः | नास्ति | नास्ति | नूतनः |
| २२ निदर्शना | एकरूपा | द्विरूपा | अन्यादृशी द्विरूपा |
| २३ परिवृत्तिः | ,, | एकरूपा | अन्यादृशी त्रिविधा |
| २४ पर्यायोक्तम् | एकरूपम् | एकरूपम् | स्फुटतरम् |
| २५ पुनरुक्तवदाभासः | नास्ति | नास्ति | नूतनः |
| २६ प्रतिवस्तूपमा | अस्ति | अस्ति | अस्ति |
| २७ प्रेयः | अलक्षणम् | अस्फुटलक्षणम् | स्फुटपरिष्कृतम् |
| २८ भाविकम् | अस्ति | अस्ति | अस्ति |
| २९ यथासङ्ख्यम् | ,, | ,, | ,, |
| ३० यमकम् | अस्ति | अस्ति | नास्ति |
| ३१ रसवत् | ,, | ,, | स्फुटतरम् |

| अलङ्कारः | भामहः | दण्डी | उद्भटः |
| --- | --- | --- | --- |
| ३२ रूपकम् | द्विविधम् | बहुविधम् | चतुर्विधम् |
| ३३ लाटानुप्रासः | अलक्षण एकरूपः | नास्ति | स्फुटपञ्चविधः |
| ३४ लेशः | निषिद्धः | अस्ति | नास्ति |
| ३५ विभावना | अस्ति | ,, | अस्ति |
| ३६ विरोधः | ,, | ,, | ,, |
| ३७ विशेषोक्तिः | अन्यादृशी | अन्यादृशी | परिष्कृता द्विविधा |
| ३८ व्यतिरेकः | एकरूपः | अव्यवस्थितबहुरूपः | परिष्कृताष्टविधः |
| ३९ व्याजस्तुतिः | अन्यादृशी | अन्यादृशी | स्फुटा |
| ४० श्लिष्टम् | अपरिष्कृतं त्रिविधम् | किञ्चित्परिष्कृतम् | स्फुटं द्विविधम् |
| ४१ संसृष्टिः | सामान्यतः सूचनम् | द्विविधा | सङ्कराद्भिन्ना |
| ४२ सङ्करः | नास्ति | संसृष्ट्यन्तर्गतः | नूतनः चतुर्विधः |
| ४३ समासोक्तिः | एकरूपा | द्विविधा | एकरूपा |
| ४४ समाहितम् | अलक्षणम् | सलक्षणं तदेव | अन्यदेव रसभावशान्तिरूपम् |
| ४५ ससन्देहः | एकरूपः | उपमान्तर्गतः | द्विरूपः |
| ४६ सहोक्तिः | ,, | एकरूपः | एकरूपः |
| ४७ सूक्ष्मः | निषेधति | लक्षयति | नास्ति |
| ४८ स्वभावोक्तिः | अस्ति | अस्ति | अस्ति |
| ४९ हेतुः | निषेधति | लक्षयति | नास्ति |

एवं भामहदण्डिसमुल्लिखितेष्वेकोनपञ्चाशदलङ्कारेषु केवलमेकचत्वारिंशदलङ्कारा भट्टोद्भटेन परिष्कृत्य प्रदर्शिता अन्ये तु नाम्नापि नोट्टङ्किताः। इदमत्र विशिष्योद्भटेऽतिशयितं वैलक्षण्यं सुधीभिर्विभावनीयम् यदसावुद्भट एव भामहदण्डिभ्यामलक्षणमस्फुटलक्षणमव्यवास्थितमविभेदमसंस्कृतं वा निर्दिष्टानामलङ्काराणां सुपरिष्कृतलक्षणादिकं शास्त्रीयव्यवस्थितप्रविभेदादिकं च निरूप्यार्वाचीनानामालङ्कारिकाणां सुगमं पन्थानं प्रदर्शयति न भामहदण्डिनाविति। नूतनांश्चालङ्कारान् स्वयमुद्भाव्य प्राचीनसम्मतांश्च कांश्चिन्निर्दयन्निराकृत्य स्वग्रन्थमुपरचयन्नात्मनोऽलङ्कारतन्त्रे विद्यमानमसाधारणं स्वातन्त्र्यं चासौ प्रख्यापयति। अन्यच्चेदंप्रथमानि लक्षणान्यलङ्काराणां प्रायेण मम्मटरुय्यकादयोऽलङ्कारलक्षणदक्षा अर्वाचीनाः परिष्कर्तारोऽभ्युपगम्य स्वोत्प्रेक्षितान् विशेषान् केवलं निरूपयन्ति यद्यपि क्वचिदमुं तिरस्कुर्वन्तीति युज्यते चास्य भामहदण्डिभ्यामनासादित अग्रिमभावोऽलङ्कारतन्त्रे।

## ३. उद्भटालङ्कारविवृतिः ।

### व्याख्याशैली ।

अवश्यव्याख्येयमर्थमपेक्षितैरेव पदैरनतिविस्तरमभिधाय सूक्ष्मेक्षिकया च शब्दानां परस्परसमन्वयं सपरिष्कारं निरूप्य यथोचितमर्वाचीनालङ्कारिकाभिनिवेशानुगुणमुद्भटग्रन्थं परामृश्य निर्दयञ्च निराकरणीयानर्थान् सयुक्तिकं निराकृत्य परस्परव्यावृत्तपदार्थस्वरूपनिर्धारणे चात्मनः सम्पूर्णं स्वातन्त्र्यं पुरस्कृत्योद्भटालङ्कारान्विवेचयन्तीयं व्याख्या सत्यं सर्वांशेनापि प्राक्तनीर्व्याख्याः समतिशयाना व्याख्यातन्तराणामपि प्रगल्भां काञ्चन व्याख्यानशैलीं शिक्षयतीवेति मनागपि विलोकयतामेतामतिरोहितं प्रतिभायात् । मूलकारासम्मतोऽयमर्थ इति वा प्राचीनालङ्कारिकैरनुल्लिखितोऽयं पन्था इति वा प्राक्तनव्याख्यात्राऽपरामृष्टोऽयमर्थ इति वाऽपरित्यज्याऽऽत्मनाऽभ्यूहितानर्थानभयं धाष्टर्यविशेषमवलम्ब्य तेषु तेषु स्थलेषु सन्निवेशयन्नयं विवृतिकारः प्रतीहारेन्दुराजं बहुभिरंशैरतिशेते ।

अर्वाचीनालङ्कारिकैः सपरिष्कारं सबहुप्रभेदञ्च निरूपितानलङ्कारान् जानत एवात्मनः प्राचीनानामविकासितकुसुमप्रायालङ्काराणामप्रौढाभ्युदयानां निरूपणपरस्योद्भटालङ्कारसारसङ्ग्रहस्य व्याख्यानारम्भशालीनतामर्थान्तरन्यासपरेणादिमपद्येन समर्थयन् मुकुलप्रायेष्वप्युद्भटसङ्गृहीतेष्वलङ्कारेषु कालविकस्वरेष्वात्मनः प्रयत्नविशेषेणार्वाचीनोल्लिखितानामर्थानां योजनेन विकस्वरतासम्पादनमादावेव "सर्वत्र विकस्वरते"ति पद्येन व्यञ्जयन्नतिप्रौढया शैल्या ग्रन्थमारभते ।

पुनरुक्तवदाभासस्यार्वाचीनसम्मतोभयालङ्कारत्वं विवक्षन् "वाचामलङ्कारा" इति यथाश्रुते च शब्दालङ्कारमात्रपरत्वेऽनुपपत्तिं परिजिहीर्षन्निव वाक्शब्दस्य शब्दार्थोभयपरत्वकल्पनम् (१) उपमादोषवियुक्तोपमालक्षणपरिष्करणम् (२) उद्भटकारिकास्वेवार्वाचीनोद्भावितैकविंशत्युपमाप्रभेदानामन्तर्भावनम् (३) अर्थान्तरन्यासे चार्वाचीनाभिसंहितं सामान्यविशेषयोः समर्थ्यसमर्थकभावमन्तर्भाव्योद्भटलक्षणं परिष्कृत्य षोडशप्रभेदकल्पनम् (४) व्यतिरेकालङ्कारे च मम्मटाद्यभिसंहितं पन्थानमनुसृत्य

श्रयमाणोद्भटोदाहरणेष्वेव पदभेदापादनेनानन्तभेदसम्भावनम् (५) विरोधालङ्कारे च 'गुणस्य वा क्रियाया वा' इति वा शब्दद्वित्वमनवक्लृप्तिद्योतकमभिधायार्वाचीनाभिमतानां दशविधविरोधभेदानामुपक्षेपणम् (६) अप्रस्तुतप्रशंसायां च साधारणमेकरूपं लक्षणमुद्भटसम्मतं मम्मटाद्यर्वाचीनाभिमतपञ्चप्रभेदसामान्यमुद्वीक्ष्यान्येषामपि चतुर्णां प्रभेदानामुद्भटसम्मतानामिव तत्र समुद्योजनम् (७) प्रेयोऽलङ्कारे च भावानामनुभावादिभिः सूचनस्यानुमानार्थकतां परित्यज्यानन्दवर्धनादिसम्मतं व्यङ्ग्यव्यञ्जकभावं प्राधान्येन काव्यरसयोः संबन्धतया निरूप्य रसानां काव्यजीवितत्वनिर्धारणम् (८) पर्यायोक्तं चाप्रस्तुतप्रशंसाप्रभेदान्तर्गतं विभाव्यार्वाचीनादृतानां बहूनां पर्यायोक्तप्रकाराणां सोदाहरणमुद्भटलक्षण एव समन्वयप्रकाराविष्करणं (९) सन्देहसङ्करे च "वरेन्दुरि"ति स्वीयोदाहरणानुसारेणोभयालङ्क्रियोल्लेख इत्येव लक्षयितव्ये "अनेकालङ्क्रिये"ति कथनं सफलयितुमिव "नयनानन्ददायी"ति पद्ये बह्वलङ्कारसन्देहसङ्करसम्भवस्यार्वाचीनोल्लिखितस्योद्भावनम् (१०) इत्येतानि नव्यालङ्कारिकसम्मतान्युद्भटाभिसंहितान्यनभिसंहितानि वा तदीयप्रबन्धे संयोज्य मुकुलरूपाणामप्यौद्भटालङ्काराणां विकस्वरोचितप्रमोदाधायकत्वं सम्पाद्य "नायमेकान्त" इत्यनेन स्वप्रथमपद्यभागेन प्रतिज्ञातं विकस्वराणामेव प्रमोदाधायकत्वमिति नियमस्यानैकान्तिकभावं व्यवस्थापयति स्म ।

इदञ्च विवरणमनपेक्षितेष्वपि स्थानेष्वतिविस्तृतामक्लिष्टानप्युद्भटप्रयोगानतिक्लेशेन निर्वहन्तीं सूक्ष्मदृष्ट्या परिष्करणीयेष्वर्थेष्वतथाकुर्वतीं प्रतीहारेन्दुराजस्य लघुवृत्तिं स्वीयशैल्या यथार्थलघुवृत्तिमेव विरचयेदितीदमेव भवति विषादस्थानम्—तदा तु किमु वक्तुं पार्यते यदा वक्ष्यमाणविधया तत्रत्या दोषा अपि स्थूलस्थूला निरीक्ष्येरन् ।

---

## उद्भटविवेचनम् ।

---

विमर्शनकुतूहलिन्या विशुद्धप्रतिभया व्याख्यातुं प्रारभमाणश्च विवृतिकारः न मूलकारस्य महत्तां संप्रदायस्य संरक्षणीयतां स्वतन्त्रप्रतिभाप्रतिभातार्थेष्वाविष्करणसङ्कोचं वा पालयति । उद्भटविवरणञ्चेदं विवृतिकारस्य तादृशीं

स्वतन्त्रविमर्शनकुतूहलितां द्योतयति या न कदाचिदपि मूलकारस्य माहात्म्यमस्थाने परिपालयितुं प्रवर्तेत परन्तु तद्ग्रन्थगतदोषाणामशङ्कमाविष्करणेन तदुक्तानर्थान् परिष्कर्तुं निराकर्तुं वा प्रयतेत। सन्ति च तादृशानि निदर्शनानि निरन्तराण्यतिसङ्क्षिप्तेऽप्यत्र विवरणे। तेषु च कतिपयान्यधस्ताद्विवृणुमः।

( १ ) इदम्प्रथमतयाऽलङ्कारशास्त्रेतिहासे पुनरुक्तवदाभासाख्यस्यालङ्कारस्य निरूपणमुपक्रममाणश्चोद्भटः तमलङ्कारं लक्षयत्यभिन्नवस्त्विवोद्भासिभिन्नरूपपदमिति। इदञ्चादिमं लक्षणमेवासङ्गतार्थं मन्वानश्च विवृतिकारः बहुधा तमेव लक्षणशब्दं परिष्कृत्यादोषं लक्ष्येषु सङ्गमयति (पु-२.)। "शितिकण्ठः कालगलत्सततीशोकानलव्यथ" इत्युदाहरणे च यदभिन्नार्थकमिव भासमानं कालगलेत्येतत् न तत् भिन्नरूपं पदं गलान्तस्यापदत्वात्। कालगलदिति तु यत्पदं न तत् शितिकण्ठपदेनाभिन्नाभिधेयमिवोद्भासि। किञ्चातकारान्तः कालगलैकदेशः न कञ्चनार्थमभिधत्त इत्यभिन्नाभिधेयत्वभ्रम एव कुतः। इत्येवंरूपाश्च शङ्कास्समुद्भाव्य तत्तद्व्याख्यात्रभिमतिमनुरुध्य लक्षणं परिष्करोति न प्रतीहारेन्दुराज इव जोषमविचारितरमणीयं कञ्चनार्थमनुरुन्धे।

( २ ) यत्र चोद्भटोदाहरणानि नातीव स्पष्टानि तदीयलक्षणानामेव विरुद्धानि वा तादृशेष्वपि स्थलेषु स्पष्टतमानामविरुद्धलक्षणानां वोदाहरणानां प्रदर्शनेन ग्रन्थस्यासाङ्गत्यमुद्भाव्य निराकरोति विवृतिकारः।

रूपकचतुर्थप्रभेदस्य 'पररूपेण रूपणात्'इति तल्लक्षणोदाहरणस्य च 'आसारधाराविशिखैः' इत्यस्यास्पष्टतामुद्भावयन् रुद्रटाद्युक्तपरम्परितरूपकस्यैव तस्य स्वरूपं लक्षणस्यान्वयान्तरकरणेन परिष्कृत्य (पु.१०-११)स्पष्टतमं "मेरुरुकेसरमुदारे"ति पद्यमपि श्लिष्टपरम्परितरूपकोदाहरणं प्रदर्शयति।

( ३ ) एवं दीपकोदाहरणान्युद्भटोपात्तानि तल्लक्षणस्यैव विरुद्धानि। अर्थावसेये उपमानोपमेयभावे प्रकृताप्रकृतगामिधर्मस्यादावन्तमध्ययोर्वा निर्देशपरं हि दीपकालङ्कृतं काव्यम्। "सञ्जहार शरत्कालः" इत्याद्युदाहरणत्रय्यां हि त्रयोऽपि धर्माः प्रकृतमात्रगामिनो भवन्ति तुल्ययोगितावदलङ्करणक्षमा इति न्यूनतामुद्भाव्योदाहरणान्तराण्येव स्वमनीषिकाकल्पितानि प्रददाति 'रेहइ मिहिरेण'इत्येवमादीनि (पु.१२)। शरद्वर्णने प्रस्तुते कदम्बकुसुमशोभायाः

प्रेयोवियोगिसुखसम्पदां च संहरणं, विदेशवसतियातपतिकाजनदर्शनशरदां प्रवासिदुःखप्रदत्वं, कान्ताननेन्दोरिन्दोश्चानन्दकरत्वमित्येते धर्माः कीर्त्यमानाः प्रकृता एवेति न ते धर्माः प्रकृताप्रकृतगामिनो दीपयन्तीति पश्यन्विवृतिकारः सावष्टम्भमुद्भटोक्तान्युदाहरणानि निराकृत्योदाहरणान्तराणि तुल्ययोगिताऽऽक्रान्तानि निरूपयामास ।

(४) एवमाक्षेपालङ्कारोदाहरणमत्यन्तायुक्तमेव विलोकयन्महता प्रबन्धेनानुपपत्तिं प्रतिपाद्यैवंविधानां दोषाणामुद्भटग्रन्थे बहुलं संभवं सूक्ष्मदृष्टिभिश्च न सतृणाभ्यवहारिभिरत्र भाव्यमिति च साकूतं निर्दिशति[1] । (पृ.२२–२३)। वक्ष्यमाणविषयस्य ह्याक्षेपस्य 'अहो स्मरस्य माहात्म्यम्' इत्युदाहरणमुद्भटोपक्षिप्तम् । तत्र च विवृतिकार उक्तविषयतामेव पश्यति, 'न हि सामान्यविशेषाभ्यां यदुक्तं तदप्यनुक्तं भवती'ति कथयन् । स्मरमाहात्म्यं च प्रकृतं लोकातिक्रान्तगोचरत्वेन वर्ण्यमानमतिशयोक्तिच्छायामावहति । उक्तविषयश्चाक्षेपस्सङ्कीर्यते तयेति तयोः संकरकृतां चारुतामेव तत्रोदाहरणे पश्यति। द्वितीयोदाहरणे च "क्व वा कामविकल्पानामन्तः कालस्य चेक्षितः" इत्यत्र सामान्यत उपक्रान्तस्य चित्रत्वस्य प्रतिषेधः क्व वेत्यनेन न क्रियते किंतु कामविकल्पानां कालस्य चान्तेक्षितत्वं प्रतिषिध्यत इति कथमाक्षेपतेति पृच्छति । चित्रत्वाक्षेपपर्यवसानाच्चाक्षेपत्वं यदीष्यते रूपकादिष्वपि पर्यवसानगतिमाश्रित्योपमा व्यपदिश्येतेत्यादिना च तदप्युदाहरणमसङ्गतं वर्णयन्नुदाहरणान्तराण्येव प्रदर्शयति 'सुहअ विलम्बसु' इत्यादीनि ।

(५) ऊर्जस्विनश्चालङ्कारस्योदाहरति—

"तथा कामोऽस्य ववृधे यथा हिमगिरेः सुताम् ।
सङ्ग्रहीतुं प्रववृते हठेनापास्य सत्पथम्" । इति पद्यमुद्भटः ।

अत्र चात्मनोऽर्थे तपस्यन्त्याः कन्याया हिमगिरितनयाया हठसङ्ग्रहणे शङ्करस्य प्रवर्तनन्नानौचित्यं शास्त्रविरोधं वैकान्ततोऽनुरुन्ध इति तदुदाहरणत्वं नानुमन्यते वृत्तिकारः (पृ–३५)। स चानुरक्तायाः कन्यायाः पित्राद्यनुमतिं विनाऽपि सङ्ग्रहणस्य गान्धर्वादौ विवाहे दृष्टस्यौचित्यं शास्त्रसम्मतिं च स्मारयन्नुद्भटं निग्रहीतुमिव "यदा च हठसंग्रहः शास्त्रविरुद्धो रागकारणकस्तदोर्जस्विते"ति साकूतं व्यञ्जयति । एवं च परपरिग्रहेषु रागतः प्रवृत्तिवर्णनमस्यालङ्कारस्य मुख्यमुदाहरणं भवेदिति मन्यत इव ।

---

१. तदेवमन्यत्रापि संभवी विचारः प्रकृतक्षतिमादधातीति नास्माभिर्दर्शितः

(६) तथा श्लिष्टालङ्कारोदाहरणे चानन्ता अनुपपत्तीरुद्भाव्योद्भटं निगृह्णाति (पृ. ३९–४०)। 'स्वयं च पल्लवाताम्रे'ति च यदुदाहरणं तच्छ्लेषोपमयोस्सङ्करस्योपमायाः केवलाया वोदाहरणीभवितुं युज्यते न श्लेषस्यैव। रुद्रटोक्तिमनुरुध्य "सकलकलं पुरमेतज्जातं संप्रति सुधांशुबिंबमिव" इत्यादाविव पल्लवाताम्रेत्यत्रापि शब्दमात्रसाम्येऽप्युपमा शब्दालङ्कारोऽङ्गीक्रियते नान्यत्र लब्धप्रतिष्ठः श्लेषः उपमाप्रतिभामेवापादयन् स्वयमेव स्थानं भजते। श्लेषस्य चालङ्कारान्तरव्यावर्तकत्वेऽभ्युपगम्यमाने कथमुद्भटेनैव चतुर्थरूपकश्लेषव्यतिरेकौ श्लिष्टैकजीवितौ रूपकव्यतिरेकप्रभेदेष्वन्तर्भावितौ। न तु रूपकव्यतिरेकभावात्प्रच्यावितौ। अतः पूर्वग्रन्थविरोधोऽपि भवत्युद्भटस्य। यद्गतञ्च वैचित्र्यं तस्यालङ्कार इति नयेनोद्भटोक्तमुभयविधमपि श्लिष्टं शब्दैकसमाश्रितवैचित्र्यचमत्कारीति सभङ्गाभङ्गत्वेन शब्दालङ्कारतामेवार्हति नार्थालङ्कारताम्। एवं रूपकविरोधावपि शब्दवैचित्र्यैकसमधिगतजीवितौ शब्दालङ्कारतान्नातिवर्तेत इतीमे शब्दवैचित्र्यमूलालङ्काराः शब्दालङ्कारा उभयालङ्कारा वा भवितुमर्हन्ति नार्थैकालङ्कारा इति सुधीभिर्निरसूयं विचारयितव्यमित्युद्भटमदयमुपालभते।

(७) उद्भटोपज्ञेष्वलङ्कारेषु दृष्टान्तोऽपि कश्चित् भवति। तं च लक्षयन्नुद्भटः उपमाप्रतिवस्तूपमातो व्यावृत्तस्वरूपतां सम्पादयितुं "यथेवादिपदैः शून्यं" इति विशिंषन् प्रतिवस्तूपमासमाक्रान्तमेव पद्यमुदाहरतीति तन्निष्कास्य विवृतिकारो रुद्रटोक्तिमुदाहरति "त्वयि दृष्ट एव तस्या" इत्यादिम् (पृ.५२)।

"किं वात्र बहुनोक्तेन व्रज भर्तारमाप्नुहि।
उदन्वन्तमनासाद्य महानद्यः किमासते॥"

इति चोद्भटोदाहरणे प्रतिवस्तूपमायामिव वाचकभेदेनैक एव साधारणो धर्मः प्राप्त्यासादनशब्दाभ्यामुपमानोपमेययोरुभयोरपि निगदो गदितः। रुद्रटोदाहरणे च निर्वाणविकासौ भिन्नावेव धर्माविति न प्रतिवस्तूपमा पदं भजते। एतादृशेषु चोद्भटस्यानुपपन्नार्थकथनपरेषु प्रकरणेषु विस्तरेण व्याकुर्वन्नपि प्रतीहारेन्दुराजः मूलकार इति समादरेण वा प्राचीनानां पन्था न परिभावयितव्य इति बुद्ध्या वा सर्वथा जोषंभावमेव समाद्रियमाणः स्वव्याख्यावैखरीं च प्रस्तुतार्थेभ्योऽन्यत्रैव विशेषयन् यथाश्रुतेभ्योऽर्थेभ्यः पदात्पदमपि न प्रचलतीति विवृतिमिमां विभावयतां न भवेदन्तर्हितम्।

---

## प्रतीहारेन्दुराजप्रतिक्षेपः ।

उद्भटग्रन्थव्याख्यानाय प्रवृत्तश्चायं विवृतिकारः न केवलं तदुक्तार्थानेव निर्विशङ्कविमर्शनशैल्या विभाव्य गुणदोषान् परामृशति । किं तु तदीयविवरणकारानपि स्थूलदृष्ट्या व्याकुर्वतो नोदास्ते विवेचयितुम् । प्रतीहारेन्दुराजस्य लघुवृत्तिमिवान्या अपि व्याख्या उद्भटालङ्कारविवरणपराः क्वचिद्विचार्य निरस्यन्विवृतिकारः सत्यमभिव्यञ्जयति व्याख्यान्तराणामपि सद्भावं यद्यपि भूयसा प्रतीहारेन्दुराजप्रतिपादितानेवार्थान्निराकरोति । इमानि च प्रतीहारेन्दुराजोक्तार्थनिरसनानि न केवलमस्य विवृतिकारस्य नव्यालङ्कारिकसम्प्रदायानुसरणमात्रोद्भूतानि । अपि तु प्रतीहारेन्दुराजस्यानृजुबुद्ध्या कल्पितक्लिष्टविवरणविस्फूर्जितान्यपीति वक्ष्यमाणदूषणनिदर्शनेभ्यः स्फुटं निरूपयितुं पार्यते ।

### ( १ ) पुनरुक्तवदाभासः ।

एतस्य च लक्षणवचनं प्रतीहारेन्दुराजो विगृह्णाति "अभिन्नं वस्तु यस्मिन्नुद्भासते तदभिन्नवस्तु । भिन्नं रूपं ययोस्ते भिन्नरूपे । अभिन्नवस्त्विवोद्भासेते भिन्नरूपे पदे यस्मिंस्तत्" इति । इदञ्च विग्रहवाक्यप्रदर्शनमनुपपन्नमिति विवृतिकारः निरस्यति । अभिन्नवस्त्विवतीदं पदं यदि भिन्नरूपे इति द्विवचनान्तस्य विशेषणं तदा प्रथमबहुव्रीहौ अन्यपदार्थः कथमेकवचनान्तेन यस्मिन्निति शब्देनोपात्तः इति मन्वान इव तदेव परिष्कृत्यानुवदति विवृतिकारः " अभिन्नं वस्तु वाच्यं ययोस्ते अभिन्नवस्तुनी । ते इव भासेते भिन्नरूपे पदे यत्रेति केचिदि"त्यन्तेन ( पु. २ )। अनूद्य चैवं प्रतीहारेन्दुराजसम्मतार्थं लक्षणमव्याप्त्या दूषयति । यद्येवं पदद्वयस्यैव लक्षणे प्रवेशस्तर्हि "तनुवपुरि"ति पुनरुक्तवदाभासालङ्कृतकाव्ये बहूनां पदानां तथाविधतया लक्षणमव्याप्तमथवा बहवः पुनरुक्तवदाभासांशास्तत्र ज्ञेया भवेयुरिति तन्मतं निरस्य प्रकारान्तरेण लक्षणं परिष्करोति । तथा तदुदाहरणेऽपि " ततः प्रभृती"ति पद्ये "तदा प्रभृती"ति पठन् प्रतीहारेन्दुराजः सतीवियोगादारभ्येति व्याचष्टे । इदञ्च सर्वथाऽनुपपन्नम् । अयञ्च श्लोकः उद्भटकृतकुमारसम्भवकाव्यान्तर्गतः । तत्रैव शङ्करेण कामे दग्धे गौर्याश्च निर्विद्य पितृगृहं गतायां शिष्टकथाभागस्य वर्णनपरे ग्रन्थभागे प्रथमस्थानमौचित्याद्भजते । पूर्ववृत्तसापेक्षश्च ततः

शब्दोऽर्थात्पूर्ववृत्तं कामदहनरूपार्थमेवापेक्षेत । न तु चिरनिर्वृत्तं सतीवियोगम्। अमुश्चार्थं ग्रन्थकार एव शङ्करमुखेनोत्तरत्र—

" चण्डालकल्पे कन्दर्पं दुष्ट्वा मयि तिरोहिते ।
सञ्जातातुलनैराश्या किं सा शोकान्मृता भवेत् ।।"

इति कन्दर्पदाहोत्तरतिरोधानरूपपूर्वकथाभागं वक्ष्यति । एवं मन्वानः विवृतिकारः "ततः कामदहनादारभ्ये"ति कुमारसम्भवकाव्यस्थपूर्वकथाभागेनामुं श्लोकं सङ्गमयन् प्रतीहारेन्दुराजं शिक्षयतीव (पु.३) । अतएव "स देवो दिवसान्निन्ये" इति च दिवसग्रहणेन कामदहनोत्तरं कतिपयदिवसानन्तरं शरदि समुपक्रान्तायां कालगलत्सतीशोकानलव्यथस्य हरस्य गौरीस्मरणानुरागयोर्वर्णनमुच्यमानमुपपद्यते । तथा निस्सङ्गपदञ्च पूर्वं परिचर्यार्थमागताया उमायास्सङ्गं च तदा निवृत्तं द्योतयति ।।

## (२) लाटानुप्रासः ।

अत्रापि प्रतीहारेन्दुराजव्याख्यामनुत्थितिपराहतामेव विवृतिकारः प्रदर्शयति । "शब्दानां वा पदानां वा" इति लक्षणवाक्यं शब्दपुनरुक्तिपदपुनरुक्तिशब्दपदपुनरुक्तिरूपभेदत्रयपरं स्वयं कल्पयित्वा पदशब्दौ च स्वतन्त्रपरतन्त्रत्वेन परिभाष्य तयोश्च प्रत्येकं भेदद्वयमिति पञ्चप्रभेदानुद्भटलक्षितक्रममुल्लङ्घ्य व्युत्क्रमेणोदाहरन्प्रतीहारेन्दुराजः वृथा सुगमेऽप्यर्थे क्लिश्यतीति द्योतयन्नक्लेशं व्याकुर्वन् प्रतिक्षिपति तन्मतम् विवृतिकारः। अत्र च शब्दपदयोः पुनरुक्तिप्रभेदकल्पनमेव लक्षणोदाहरणविरुद्धमनुपपन्नञ्च । 'पद्मिनीः पद्मिनीगाढे'त्युदाहरणे पद्मिनीशब्दस्यैव पुनरुक्तिदर्शनात् । न हि तत्र पद्मिनीरिति पदस्य पुनरुक्तिः । मूलोदाहरणक्रमश्च वृथोल्लङ्घ्यते । वाशब्दस्य च लक्षणान्तर्गतस्य तृतीयप्रभेदे मूलतो हानिरित्यादिबहुसंबद्धकल्पनाः प्रतिक्षिपन्विवृतिकारः व्याकरोति " तस्मादित्थमेतत् । शब्दानां पदानां वेति द्वौ भेदौ ।" इत्यादिना " पञ्च विभेदाः क्रमेणोक्ताः " इत्यन्तेन ग्रन्थेन ( पु. ६ ) ।

## (३) रूपकम् ।

अस्य च "श्रुत्या सम्बन्धविरहात्" इत्यादि लक्षणं, "श्रुतिर्निरन्तरार्थनिष्ठः शब्दव्यापारः । तयाऽनुपपद्यमानपदान्तरसंबन्धं सत्पदान्तरं" इत्यादिना व्याकुर्वतः प्रतीहारेन्दुराजस्यानवधानं " पदस्य श्रौतेनार्थेन श्रुत्या संबन्धो

भवत्येवेति तदभावो न व्याख्येय" इति कथनेन द्योतयन् विवृतिकारः "श्रुतिप्रतिपादितोऽर्थ इह उपचाराच्छ्रुतिः" (पु. ७) इति व्याख्यया श्रुतिपदं श्रौतार्थपरमिति परिष्कृत्यासङ्गतिं वारयति । एवमेतदुदाहरणे "ज्योत्स्नाम्बुने"ति पद्येऽपि 'असिच्यते'ति क्रियोपादानसामर्थ्यात् सेकसाधनीभूतस्याम्बुन उपमानभूतस्यापि प्राधान्यमुपमेयस्य चाप्राधान्यं रुद्रटोक्तितो यथाश्रुतगत्याऽवगत्य समासोक्तरूपकतां च सम्भाव्य समुद्भाविताशङ्कानिराकरणे रभसप्रवृत्त्या क्लिश्यन्तं, एकत्र श्लोके अवस्थाद्वयस्य रूपकातिशयोक्तिछायारूपालङ्कारद्वयस्य च कल्पनाविकल्पेषु विमुग्धं प्रतीहारेन्दुराजं हस्तावलम्बदानेनोत्थापयन्निव विवृतिकारोऽक्लेशमेव 'असिच्यतेत्यनेन व्याप्तिर्लक्ष्यत इति यथोक्तमेव साधु' (पु. ९) इति कथनेन शङ्कां परिजहार । रुद्रटवचनस्य च शाब्दप्रक्रमानुसारिताकथनेन गत्यन्तरं निरूप्य प्रतीहारेन्दुराजस्यावस्थाद्वयालङ्कारद्वयकल्पनाकोलाहलम् 'अनेकालङ्क्रियोल्लेखे' इति न्यायेन सङ्करलक्षणाक्रान्तताप्रदर्शनेन रूपकोदाहरणीभाव एवानुपपत्तिं प्रदर्श्य निराचकार । एवं "पररूपेण रूपणात्" इति चतुर्थरूपकप्रभेदलक्षणं 'परस्यार्थान्तरस्य यद्रूपं कारककदंबकं तेन रूपणात्'इति व्याकुर्वन्तं प्रतीहारेन्दुराजमसम्बद्धार्थकथनव्यापृतं मन्वानो विवृतिकारः समञ्जसं व्याख्यान्तरं लक्षणस्य कथयन् तद्व्याख्यां निराकरोति । 'परेणार्थान्तरेण यो रूपो रूपणमर्थात्प्रकृतस्यार्थस्य तेन निमित्तेन यद्रूपणं तस्मात्' (पु. १०) इति च व्याकुर्वन्नुपार्जनभूषणयो रूपणाधीनरूपणमासारधाराविशिखादीनामुपपद्यमानं पश्यति ।

## (४) दीपकम् ।

दीपकलक्षणे चान्तर्गतोपमाः इति पदं निविष्टम् । तच्च विगृह्णन् प्रतीहारेन्दुराजोऽनवहितः प्रमाद्यति । 'यत्रान्तर्गतोऽर्थसामर्थ्यावसेयत्वादुपमानोपमेयभावो येषां तथाविधानां धर्माणाम्' इति हि तस्य विवरणम् । अत्र च धर्माणामुपमानोपमेयभावोऽन्तर्गत इति चार्थः फलति । न हि संहरणादीनां धर्माणामौपम्यमर्थसामर्थ्याक्षिप्तम् । किन्तु कुसुमशोभासुखसम्पदोस्तत् । तयोश्च साधारणो धर्मः संहरणमेकत्र निर्दिश्यमानमुभयं दीपयतीतीदमेवाभिमतमनवहिततया येषां धर्माणामौपम्यमन्तर्गतमिति विगृह्णाति । अमुञ्च प्रमादं विवृतिकारोऽननुवादमेव व्याख्यान्तरप्रदर्शनेन

सूचयति 'सामर्थ्यावसेय उपमानोपमेयभावो येषु सत्सु तादृशाः' (पु. ११) इति। येषु धर्मेषु आदावन्ते वा सत्सु सामर्थ्यादौपम्यमवसीयते ते तादृशा धर्मा इति तु विवरणमनवद्यम्। एवमेव 'प्राधान्येतरयोगिनः' इति च लक्षणान्तर्गतं विशेषणान्तरं 'अयमत्रानुवादः प्राप्तार्थत्वात्' इति कथनेन निरर्थकं मन्यते प्रतीहारेन्दुराजः। स्फुटेऽपि तस्य विशेषणस्य फलवत्त्वे इदमेतस्य विवरणं स्थूलविलोकनापतितमिति विवृतिकारः तुल्ययोगिताव्यावृत्तिं तद्विशेषणफलं प्रदर्शयति। 'प्राधान्येतरयोगिन इति विस्पष्टार्थम्। उपमेयं हि प्रधानमुपमानं त्वितरत्। इति व्याख्यानमसत्' इत्यादिना ग्रन्थेन (पु. ११)।

## (५) उपमा।

" यच्चेतोहारि साधर्म्यमुपमानोपमेययोः।
मिथोऽविभिन्नकालादिशब्दयोरुपमा तु तत्॥ "

इत्यत्र चोपमालक्षणे चेतोहारिपदं स्पष्टार्थमलङ्काराधिकारादेव चेतोहारित्वस्यार्थसिद्धत्वात् इत्यभिसन्दधानो वामनमपि प्रमाणयन्प्रतीहारेन्दुराजो व्याख्याति। 'तेनालङ्कारत्वादेवोपमायाश्चेतोहारित्वं लब्धम्। अतश्चेतोहारीत्यनुवादः प्राप्तार्थत्वात्' इति ग्रन्थेन। इमां च व्याख्यामसहमानो विवृतिकारः सफलयति चेतोहारिपदम्। स तु पश्यत्यष्टविधदुष्टोपमाव्यावृत्तिं फलं तत्पदस्य। अलङ्कारप्रस्तावाच्च सत्त्वप्रमेयत्वादिनाऽपि संभाव्यमानं साधर्म्यमेव व्यावर्त्येत न तु 'सलाञ्छनेन्दुबिम्बाभं मुखं भाति मृगीदृशः' इत्यादीनाम्। साधर्म्यमात्रस्य चोपमालक्षणत्वे उक्तोदाहरणेऽपि मुखेंद्वोः साधर्म्यं वर्ण्यत इत्युपमात्ववारणाय चेतोहारिपदम् इति हि तदाशयः। अमुमेवार्थं "नत्वलङ्कारप्रस्तावात्सत्त्वप्रमेयत्वादिसाधर्म्यनिराकरणार्थत्वेनोपयुज्यते इति विस्पष्टार्थम्" (पु. १४) इति ग्रन्थेन प्रतिपाद्य प्रतीहारेन्दुराजं प्रतिक्षिपति।

एवं 'मिथो विभिन्नकालादिशब्दयोः' इति च भागं विवृण्वन् प्रतीहारेन्दुराजः नूतनां काञ्चन प्रक्रियां प्रदर्शयति महता क्लेशेन। तदीयव्याख्यया फलितस्त्वर्थः—भिन्नप्रवृत्तिनिमित्तकशब्दप्रतिपाद्ययोरुपमानोपमेययोश्चेतोहारि साधर्म्यमुपमा इति। एतेनानन्वयव्यावृत्तिः भवेत्। एतदर्थं च "चतुष्टयी शब्दानां प्रवृत्तिः" इति जात्यादीनां चतुर्णामेव प्रवृत्तिनिमित्तत्वे महाभाष्यकारमारभ्य प्रसिद्धेऽपि कालदिगादीनां प्रवृत्तिनिमित्तत्वं

केषुचिच्छब्देषु नूतनमत्रोपक्षिप्यते । प्रथमप्रवृत्तिनिमित्तत्वेन प्रसिद्धां जातिं पुरस्कृत्य ‘ विभिन्नजात्यादिशब्दयोः ’ इति वक्तव्येऽप्रसिद्धस्य कालादेस्तत्त्वं चोद्भटसम्मतमित्युत्प्रेक्ष्यते । निरर्थकश्च मिथः पदमित्यादीनि बहूनि क्लिष्टानि कल्पयन्तं प्रतीहारेन्दुराजं वारयन्नकारप्रश्लेषेणार्थान्तरं बहुफलं प्रदर्शयति विवृतिकारः “ मिथः अन्योन्यगतत्वेन वर्तमानोऽर्थात्साधारणः अविभिन्नकालादिः शब्दो ययोरित्यकारप्रश्लेषः । न तु भिन्नप्रवृत्तिनिमित्तयोरिति व्याख्येयम् ” ( पृ. १४ ) इत्यादिना ग्रन्थेन । प्रयोजनश्चास्य विशेषणस्य कालभेदादिना साधारणधर्मो यत्र भिद्यते राम इव भाति राजेत्यादौ तत्रोपमात्ववारणं प्रदर्शयति । वस्तुतस्तु भामहलक्षणे ‘ विरुद्धेनोपमानेन देशकालक्रियादिभिः । ’ (२-३०) इत्यत्र निर्दिष्टं देशकालक्रियाविरोधमनुकर्तुं प्रवृत्तस्योद्भटस्यैवं वचनमिति स एवास्यार्थ इत्येव युक्ततरम् ।

किं चात्रैवार्थ्याः पूर्णाया उपमायाः उदाहरणे प्रबोधाद्धवलमिति पद्ये पूर्णेन्दुबिंबस्य केवलस्य किञ्जल्कालीनषट्पदकुमुदकाननोपमानभावं वर्णयन् धर्मन्यूनत्वेन सम्भवन्तमुपमादोषं विस्मरन्नेव लघुवृत्तिकारो व्याख्याति । इमां च न्यूनतां परिजिहीर्षन्निव विवृतिकारः शशाङ्कबिम्बप्रतिममिति पठन्नुपमानोपमेययोर्धर्मन्यूनतां निराकुर्वन्नुपमादोषं वारयति ( पृ. १६ ) । लुप्तोपमायां च साधारणधर्मलुप्तायाः वाक्यसमासगम्यायाः इदमेवोदाहरणमसितोदरत्वरूपधर्मलुप्तं विवक्षन् पाठभेदप्रदर्शनेन पुनरपि धर्मन्यूनताख्योपमादोषं न स्मृतिपथे समारोपयति प्रतीहारेन्दुराजः । विवृतिकारस्तु तामिमां प्रतीहारेन्दुराजव्याख्यामनूद्य ‘ इति न युक्तं व्याख्यानमसितोदरोत्पलविवक्षायां तु धर्मन्यूनत्वे दुष्टैवेयं स्यात् । तस्मान्नेत्रैरिवेत्याद्युदाहरणम् । ’ ( पृ. १७ ) इति कथयन्नुदाहरणान्तरमेव ददाति ।

एवं द्वयलोपे समासगम्याया उदाहरणद्वयमुपात्तमुद्भटेनैवेति सम्भाव्योदाहरणद्वयस्य त्रिदशाधीशशार्दूल-नीलोत्पलदलेक्षणाख्यस्य प्रयोजनं गवेषयन् बहुव्रीहितत्पुरुषत्वकृतभेददर्शनमेव फलं निर्दिश्य सन्तुष्यति प्रतीहारेन्दुराजः । विवृतिकार इदमनुपपन्नं विलोकयन्नेकं संदेहसंकराक्रान्तं निष्कास्यापरमेव त्रिदशाधीशशार्दूल इत्यंशमुदाहृत्य निरस्यति प्रतीहारेन्दुराजम् ‘क्वचिदुपमानमुत्तरपदम्’इत्यादिना ग्रन्थेन ( पु. १७ ) । त्रितयलोपे समासगम्यामुदाहरन् ‘ तां शशिच्छायवदनाम् ’ इत्यत्रोपमेयलोपं मन्वानं प्रतीहारेन्दुराजं “ सप्तम्यु-

पमानपूर्वपदस्य बहुव्रीहिरुत्तरपदलोपश्चे"ति वार्तिकपर्यालोचनेनोपमानवाचकपूर्वपदान्तर्गतच्छायापदस्योत्तरपदस्य लोपमभिसन्दधानः किमुपमेयस्याथवोपमानस्य लोपोऽभिसंहित इति पृच्छन् प्रतीहारेन्दुराजविवरणं सुधीभिरेव परीक्ष्यमिति सोपहासं परित्यजति विवृतिकारः ( पु. १७ ) ।

एवं आयःशूलिक इति च त्रितयलोपे उदाहरणं स्वयमुद्भाव्यातिशयोक्तिसम्भवेनोपमात्वाक्षेपश्च सम्भाव्य शशिच्छायवदनामितिवदिति दृष्टान्तेन केवलं तमाक्षेपं समाधत्ते प्रतीहारेन्दुराजः। विवृतिकारस्तु नेमं पक्षमनुगृह्णाति। परन्त्वतिशयोक्तिमेवात्र पश्यन्नसौ प्रतीहारेन्दुराजमनूद्य दूषयति ( पु. १९ ) ।

## (६) प्रेयस्वत् ।

अयञ्च प्रेयोऽलङ्कारोऽलक्षणं भामहेनास्फुटलक्षणं दण्डिना च निर्दिष्टोऽपि स्फुटपरिष्कृतलक्षणमुद्भटेनैव निरूप्यते। तयोश्च भामहदण्डिनोरुदाहरणपद्यैः देवगुरुनृपापत्यादिविषया या प्रीतिः भावशब्दाभिधेया तद्वर्णनमेवालङ्कारतया प्रतीयते । उद्भटस्त्वेतवताऽपरितृप्यंस्तावतिक्रम्य 'रत्यादिकानां भावानामनुभावादिसूचनैः' इत्यादिना लक्षणेनान्येषामपि रत्यतिरिक्तानां व्यभिचारिसात्विकभावानां सूचनेनाप्यलङ्कारं मन्यते। क एते भावा आदिशब्देन संगृहीताः इति च विवृण्वन् प्रतीहारेन्दुराजः भावतया नाट्यशास्त्रनिर्दिष्टान् स्थायिभावानप्यन्तर्भाव्य पञ्चाशद्भावाः अनुभावादिभिः सूचिताः यत्र काव्ये तत्र प्रेयस्वद्भवतीति वर्णयति । एतेषामेव स्थायिभावानां विभावानुभावादिभिरुन्मीलितानां वर्णनाच्च रसवदलङ्कारं निरूपयिष्यति । विवृतिकारस्तु स्थायिभावनां वर्णनस्य रसात्मतापादनं विनाऽसम्भवाद्रसवदलङ्कारविषयतां तेषां व्यवस्थाप्य प्रीत्यात्मिकायाः रतेः व्यभिचारिसात्विकभावयोश्च सूचनपरस्य काव्यस्यैव प्रेयस्वत्वं रसवद्व्यतिरिक्तत्वं च व्यवस्थापयन् स्थायिभावानामादिपदाग्राह्यतां वर्णयन् प्रतीहारेन्दुराजं प्रतिक्षिपति 'पञ्चाशद्भावसूचनमिति व्याख्यानं न युक्तम् । हासादीनां भावानां हास्यादीनां च रसानां भेदस्यासिद्धत्वात् ।' ( पु. ३३ ) इति ग्रन्थेन । दण्डी च 'रतिः शृङ्गारतां गता ।' 'क्रोधो रौद्रात्मतां गतः' (२-२८१-२८३ ) इत्यादिना स्थायिभावानां रसात्मतया परिणतानां वर्णनस्य रसवदलङ्कारत्वमुदाहरणमुखेन निरूपयन् प्रेयोऽलङ्कारे प्रीतिरूपाया रतेरिव भावान्तराणामपि विषयतां व्यञ्जयति न रतिहासादीनां स्थायिभावानाम् । एवं स्थिते स्थायिभावानां रसवत्तयाऽलङ्कुर्वतां प्रेयोऽलङ्कारभावकथनं प्रतीहारेन्दुराजस्य सर्वथाऽनुपपन्नमिति विवृतिकारो निरस्यति ।

## (७) सङ्करः ।

तृतीयसङ्करप्रकारं विवृण्वंश्च लघुवृत्तिकारः स्वरसप्रतीतमर्थं परित्यज्य स्वमनीषितमर्थं कश्चिदुद्भटग्रन्थे समारोपयतीति विवृतिकारो निगृह्णाति ।

" शब्दार्थवर्त्यलङ्कारा वाक्य एकत्र भासिनः ।
सङ्करो वैकवाक्यांशप्रवेशाद्वाऽभिधीयते ॥ ' (५-२२)

इत्यत्र च लक्षणे एकस्मिन् वाक्ये वाक्यांशे वा प्रतिभासमानाः शब्दार्थवर्त्यलङ्काराः सङ्करतां प्राप्नुवन्तीति स्वरसतः प्रतीयमानेऽप्यर्थे 'शब्दार्थवर्त्यलङ्कारा' इत्यमुमंशमेकवाक्यभासिनः इत्यत्रैव सम्बध्य वाक्यैकदेशप्रविष्टाश्चालङ्काराः शब्दमात्रवृत्तयोऽर्थमात्रवृत्तयोऽपि भवन्तीति प्रतीहारेन्दुराजो निरूपयन्नुदाहरणेऽपि स्वोत्प्रेक्षितमेव श्लेषोपमाख्यार्थालङ्कारयोः साङ्कर्यं प्रतिपादयति । अर्थालङ्कारद्वयसाङ्कर्यस्य च चतुर्थसङ्करे संसृष्टौ वा वक्ष्यमाणायामन्तर्भावसम्भवमुभयत्रान्वययोग्यस्यैकवाक्योपात्तस्य च प्रधानस्य 'शब्दार्थवर्त्यलङ्कारा' इत्यस्य विच्छिद्यैकदेशमात्रान्वयकथनक्लेशञ्च न पश्यति ।

अमुमेवार्थं विवृतिकारः 'यत्त्वेकवाक्यांशेसादिनाऽर्थालङ्कारसङ्करो व्याख्यातस्तदसत् । चतुर्थे सङ्करे संसृष्टौ वा तस्यान्तर्भावात् । (पु. ४७) इति ग्रन्थेनानूद्य निराकरोति । तथा " सच्छायवर्णिका चारुकर्णिका अम्भोजिनीव " इत्युदाहरणे चोपमाप्रतिभोत्पत्तिहेतुभूतार्थश्लेषस्योपमायाश्च साङ्कर्यं कथयन् लघुवृत्तिकारः " पल्लवाताम्रभास्वत्करविराजिता प्रभातसंध्येव" इति श्लेषोदाहरणे श्लेषस्यालङ्कारान्तरव्यावर्तकत्वमनवकाशादुद्भटोपन्यस्तमात्मना चानुमतं विस्मरतीव । शब्दसाम्यकृतश्चौपम्यमुदाहरणद्वयेऽपि स्फुटमिति भवतीदं श्लेषमात्रमुद्भटस्य मते नोपमा । अमुं च पूर्वोत्तरविरुद्धकथनं विवृतिकारः प्रकाशयति 'उदाहरणे च श्लेषोपमयोः यत्साङ्कर्यं व्याख्यातं तदप्युपेक्ष्यम् । श्लेषस्य निर्विषयतापत्तेः । येन ध्वस्तमनोभवेनेत्यस्योदाहरणमितिचेदनुद्भटं चेदम् । " (पु. ४७) इत्यन्तेन ग्रन्थेन ।

## (८) काव्यलिङ्गम् ।

' छायेयं तव शेषाङ्गकान्तेः किञ्चिदनुज्ज्वला ।
विभूषाघटनोद्देशान्दर्शयन्ती दुनोति माम् ॥ '

इति काव्यलिङ्गोदाहरणं च विवृण्वन् लघुवृत्तिकारो विशेषतोऽनवधानपराहत इति स्फुटं प्रतिभाति । तव शेषाङ्गकान्तेः सकाशात् किंचिदनुज्ज्वला इयं छाया भूषणोचितप्रदेशान् दर्शयन्ती मां दुनोतीति सामान्यदृष्टीनामपि

प्रतिभायादयमर्थः। प्रतीहारेन्दुराजस्तु कान्तेरिति पदं षष्ठ्यन्तं परिगृह्णन् तस्या अनुज्ज्वला छाया लिङ्गभूता अनुमापयतीति कल्पयित्वा स्कन्धादीनामनुज्ज्वला छाया आभरणशून्यकण्ठादीनामाभरणसम्बन्धमतीतमनुमापयतीति क्लिष्टसम्बन्धं कथनार्थं प्रतिपादयितुमीहमानस्सुतरां प्रमाद्यति। विवृतिकारस्तु अङ्गानामाभरणोचितानामाभरणशून्यत्वे कान्तिरनुज्ज्वला भवेत्। अनुपयुक्ताभरणानाञ्च स्कन्धादीनामङ्गानां सर्वदा दृश्यतैवेति कथं तस्याश्छायाया अनुज्ज्वलता कथ्येत। किं च इयमिति प्रत्यक्षत आभरणशून्यानुज्ज्वलकण्ठशोभा निर्दिश्यते। कण्ठगता चानुज्ज्वला शोभा कण्ठ एव भूषणसम्बन्धमतीतं स्मारयन्ती दुनोतीति कथनञ्च युज्यते। न स्कन्धगतानुज्ज्वलशोभा विभिन्नाधिकरणकण्ठगताभरणसम्बन्धं स्मारयेत् इति च मन्वानः प्रतीहारेन्दुराजं निरस्यति "आभरणन्यासास्पदकण्ठादिशेषाणामङ्गानां या कान्तिः तस्याश्छाया इत्यसद्व्याख्यानम्" (पृ. ५२) इत्यादिना ग्रन्थेन।

एवमतिसङ्क्षिप्तायामप्यस्यां व्याख्यायामुद्भटप्रतीहारेन्दुराजयोरनवधानविलसितानां स्फुटं विवेचनं तेषां च निरसनपरिष्करणानि दृश्यमानानि प्राधान्येन विवृतिकार एतयोः प्रमादपरिष्करणायैव प्रकृतग्रन्थं प्रारेभ इत्येव सम्भावनामुद्भावयन्ति। अतएव चैतस्या उद्भटालङ्कारविवृतिरित्यभिधानादुद्भटविवेक इति वोद्भटविचार इति वाऽभिधानमतितरामौचित्यमनुसरतीति पूर्वोक्तोद्भटप्रतीहारेन्दुराजयोः परामर्शाभ्यां स्पष्टं विभाव्यमानं, मन्ये वक्ष्यमाणजयरथानूदितोद्भटविवेकग्रन्थसंवादेन दार्ढ्यं प्राप्नुयादिति।

---

## ४. विवृतिकारो राजानकतिलकः।

:o:

### जयरथानुवादानां संवादाः

पूर्वोक्तप्रबन्धेन चोद्भटप्रतीहारेन्दुराजयोर्विशेषतः, सामान्येन च व्याख्यानान्तराणामुद्भटविवृतिपराणां विवेचनमेव मुख्यतया प्रकृतव्याख्याया विधित्सितमिति विस्पष्टमेव प्रतीयात्। उद्भटकाव्यालङ्कारसारसङ्ग्रहस्य च विना प्रतीहारेन्दुराजस्य लघुवृत्तिं नान्या काचिद्व्याख्या प्रतीहारेन्दुराजात्पूर्वं पश्चाद्वा केनाऽपि प्रणीताऽद्य स्वरूपतः समुपलब्धा दृश्यते। परन्त्वेभिरत्र व्याख्यायामतितरां क्रियमाणैरुद्भटविवेचनैः प्रकृतव्याख्या यद्यप्यनुल्लिखितप्रणेतृनामधेया सत्यं स्मारयत्येव श्रुतपूर्वां काञ्चिद्व्याख्यामुद्भटविवेकाख्यामुद्भटविचाराख्यां वा राजानकतिलकप्रणीताम्।

किमियं व्याख्या राजानकतिलकस्योद्भटविवेको भवेदित्यत्र किञ्चिद्विमृशामः। राजानकजयरथः खलु काश्मीरकः स्वीयालङ्कारविमर्शिन्यामलङ्कारसर्वस्वव्याख्यायां द्विरुद्भटविवेकाख्यव्याख्यां राजानकतिलकप्रणीतां स्मरति त्रिश्च राजानकतिलकम्। यत्र च व्याख्यां स्मरति तत्रानुवदत्यपि तदीयमाशयं तदीयाक्षरैः स्वीयशब्दैर्वा। काव्यालङ्कारसारसङ्ग्रहश्च प्रतीहारेन्दुराजस्य लघुवृत्त्या साकं सम्पादयन् बनहट्टीमहोदयः उद्भटालङ्कारव्याख्यानान्तराणि विशेषतस्तदीयभूमिकायां परामृशन्नियं व्याख्या राजानकतिलकस्योद्भटविवेको नैव भवितुमर्हतीति प्रतिजानीते[1]। न च निरूपयति तत्र विशेषतः कारणानि। अथवा प्रान्तेषु सम्पादितेदंव्याख्यांशैस्स्वयमेव विमर्शकाः पश्यन्त्विति मन्यत इव।

पदे पदे चेदंव्याख्यात्रा क्रियमाणैश्चोद्भटविवेचनैः स्वतन्त्रगम्भीरैश्च विचारैः प्रलोभितोऽपि यदि कश्चिदुद्भटविवेक इतीमां व्याख्यां न प्रत्यभिजानीयात् कथं वाऽयं विमर्शकः नापराध्येदिति वक्तुं पार्यते। उद्भटप्रतीहारेन्दुराजयोर्विवेचनायैव प्रवृत्ताऽतएवोद्भटविवेकाभिधानस्य च सर्वात्मना भाजनमियमपि व्याख्या यदि तादृशाभिधानात्प्रच्याव्यते प्रकारान्तरेणैवान्यानुद्भटदोषान्निरूपयन्ती काचिदन्या व्याख्योपलप्स्यत इति का वा प्रत्याशा। किमु च तदा वक्तव्यं यदा राजानकजयरथानूदितोद्भटविवेकग्रन्थाशय एव साक्षादस्यां व्याख्यायां सविस्तरं प्रतिपाद्येत।

आक्षेपालङ्कारे चालङ्कारसर्वस्वं विवृण्वन् विमर्शिनीकारः 'इह च शाब्दमेवैतदाक्षेपाङ्गम्। नार्थवशायातम्। तथात्वे हि रूपकादीनामप्युपमात्वं स्यात्। तेषामप्यार्थस्य सादृश्यस्या(स्य)भावात्। एतच्चोद्भटविचारे राजानकतिलकेनैव सप्रपञ्चमुक्तमिति न तथाऽस्माभिराविष्कृतम्।' (पृ. ११५) इति निर्दिशति। एतेन चासौ मन्यते योऽसौ निषेध उक्तस्य वक्ष्यमाणस्य वाऽर्थस्याक्षेपालङ्कारेऽपेक्षितः स च शब्दोपात्त एवाक्षेपालङ्कारं निर्वहति नार्थात्प्रतीयमानः। अर्थात्प्रतीयमानस्याप्यलङ्कारनिर्वाहकत्वे रूपकादावपि पर्यवसानगत्योपमायां विश्रान्तेरुपमाव्यपदेशो भवेदिति। अयञ्चाशयः राजानकतिलकेनोद्भटविचारे सविस्तरमुक्ततया प्रतिज्ञायमानः प्रकृतव्याख्यायामाक्षेपालङ्कारप्रस्ताव एव सविस्तरं प्रतन्यमान उपलभ्यते। अत्र हि 'द्वितीयस्मिन्नपि श्लोके क्व वेत्यनेन न चित्रत्वमाक्षिप्यते। अपि त्वन्तेक्षितत्वम्। तच्चाक्षेपपर्यवसानमिति चेदनन्वयेऽप्याक्षेपप्रसक्तिः।

१. मुम्बई—संस्कृतग्रन्थावलिप्रकाशिता—भूमिका. पु. ३१.

अपह्नुतिरूपकदीपकादावप्युपमाप्रसङ्गश्च ' ( पु. २२ ) इत्यादिना ग्रन्थेन । एतेन चाक्षेपो यत्र सर्वात्मना शाब्दः तत्रैव तस्यालङ्कारत्वं पश्यति व्याख्याकारः । अन्यथाऽपह्नुतिरूपकदीपकादावप्युपमात्वमापादयति । न चैतावता विश्राम्यति । किंतु यथाजयरथनिर्देशं विस्तारयत्यमुं विचारं महता प्रबन्धेन । अतएव जयरथोऽपि तिलकग्रन्थमेकदेशतोऽनुवदन् रूपकादावप्युपमात्वं स्यादिति सङ्गृह्यानूद्य विस्तरं तिलकग्रन्थादवगन्तव्यं निर्दिशति । स्फुटतमे चास्मिन्ननुवादे प्रकृतव्याख्यायां स्वातन्त्र्येणोद्भटस्याक्षेपालङ्कारोदाहरणप्रत्याख्यानप्रस्तावे संवदति कथं वा जयरथनिर्दिष्टराजानकतिलकोऽस्याः कर्ता न भवेत् न वेयं व्याख्योद्भटविचाराख्यां न प्राप्नुयात् ? ।

द्वितीयश्चानुवादः जयरथविमर्शिन्यां दृश्यमानस्सुतरां प्रकृतमर्थं द्रढयति । चिरेण विख्याततरः खल्वयं मतिभेद आलङ्कारिकाणां यत्तुल्येऽपि काव्यशोभातिशयाधायकत्वे सर्वेषामलङ्काराणां कश्चिदेवार्थस्यान्यः शब्दस्य इतर उभयोरलङ्करणाय प्रभवतीति कल्पनं किंप्रयुक्तमित्यस्मिन्विषये । केचन किल मन्यन्ते अन्वयव्यतिरेकावत्र हेतुम् । अन्ये चाश्रयाश्रयिभावम् । काव्यप्रकाशप्रणेता मम्मटः प्रथमस्य पक्षस्य हस्तावलम्बं ददाति । अलङ्कारसर्वस्वकारश्च राजानकरुचकः आश्रयाश्रयिभावमेवालङ्कारविभाजकधर्ममभिमन्यते । निर्दिशति च स्वीयवादस्य मूलं चिरन्तनमतानुसरणं न काव्यप्रकाशकारानुसरणम् । अयं हि तस्य ग्रन्थः ' लोकवदाश्रयाश्रयिभावश्च तत्तदलङ्कारनिबन्धनम् । अन्वयव्यतिरेकौ तु तत्कार्यत्वे प्रयोजकौ । न तदलङ्कारत्वे । तदलङ्कारप्रयोजकत्वे तु श्रौतोपमादेरपि शब्दालाङ्करत्वप्रसङ्गात् । तस्मादाश्रयाश्रयिभावेनैव चिरन्तनमतानुसृतिरिति भद्रम् ' ( पु. २०५ ) इति ।

अमुं च ग्रन्थभागं व्याकुर्वन् जयरथोऽस्मिन्विषये राजानकतिलकेनोद्भटविवेके बहु प्रपञ्चितमिति पुनर्निर्दिशति । एवं हि तस्य ग्रन्थः ' एतच्चोद्भटविवेके राजानकतिलकेन सप्रपञ्चमुक्तमिति ग्रन्थविस्तरभयान्नेहास्माभिः प्रपञ्चितम् ' इति । एतेन चाश्रयाश्रयिभावस्यालङ्कारविभाजकत्वं तिलकेनोद्भटविवेके सविस्तरन्निरूपितमिति स्फुटं प्रतीयते । प्रकृते चोद्भटव्याख्याने यद्याश्रयाश्रयिभावस्यालङ्कारविभाजकत्वं सविस्तरं निरूप्यमाणमुपलभ्येत को वाऽस्योद्भटविवेचनाय प्रवृत्तस्य ग्रन्थस्योद्भटविवेकाभिधानं राजानकतिलकप्रणीततां च प्रत्याख्यातुं प्रभ-

वेत् । द्विश्चामुमर्थमाश्रयाश्रयिभावस्यालङ्कारविभाजकत्वरूपं प्रकृतव्याख्यात्रा साभिनिवेशं व्यवस्थाप्यमानं पश्यामः । चतुर्थरूपकस्य श्लिष्टशब्दसमधिगतजीवितस्य मुख्यतः शब्दगतवैचित्र्यचमत्कारितया यदाश्रितं वैचित्र्यं तदलङ्कारतेति चात्मीयं मतमनुसृत्य शब्दालङ्कारत्वमेवासौ व्याख्याताऽभ्युपैति । न हि रूपकादीनां शब्दवैचित्र्यमात्रचमत्कारिणां शब्दालङ्कारत्वं कस्यापीष्टं यद्यपि रुद्रट उपमासमुच्चययोरुभयोरेव शब्दवैचित्र्यचमत्कारिणोः शब्दालङ्कारभावमनुमन्यते । एवं श्लेषव्यतिरेकमपि श्लिष्टशब्दगतवैचित्र्यचमत्कर्तारं शब्दालङ्कारमेव मन्यते प्रकृतोद्भटविवेचयिता । इदञ्च सर्वं वैचित्र्यमलङ्कारः, यद्गतं वैचित्र्यं तस्य चालङ्कारः यथा लोके कर्णनासाद्यलङ्काराः इत्यभ्युपगतवतः प्रकृतव्याख्यातुः सम्भवति । व्यक्तं च कथयत्यसौ यथाऽन्वयव्यतिरेकयोरलङ्कारविभाजकत्वे वैचित्र्याख्यस्य चालङ्कारस्य शब्दार्थकार्यत्वमेव भवेन्नालङ्कारत्वमिति । न हि कर्णालङ्कारव्यपदेशो भवति लोके तस्य कर्णान्वयव्यतिरेकानुविधानेन । अपितु कर्णाश्रिततया । एष च तस्य ग्रन्थः ‘अत्र शब्दमुखेनार्थस्य विचित्रत्वेऽपि मुख्यतः कविप्रतिभासंरम्भगोचरस्य शब्दस्य वैचित्र्यमिति शब्दालङ्कारत्वं युक्तम् । ग्रन्थगौरवभयात्तु न प्रतनुमः । किञ्चित्तु श्लेषस्थाने वक्ष्यामः’। ( पु. ११ ) इति । एतेन च शब्दाश्रितं वैचित्र्यमिति शब्दालङ्कारत्वं व्यवस्थापितं भवति ।

अमुमेवार्थं श्लेषविवरणे विस्तरेण कथयत्यसौ व्याख्याता । तत्र चोद्भटोद्भावितमर्थश्लेषशब्दश्लेषविभागं श्लेषलक्षणञ्च तदीयमनुपपन्नमिति निराकुर्वन् विवृतिकारः उद्भटोक्तोदाहरणेषूपमाया विरोधस्य रूपकस्य, तथा चतुर्थस्य च तस्य श्लेषव्यतिरेकस्य च रुद्रटोक्तोपमासमुच्चययोरिव शब्दालङ्कारत्वमन्वयव्यतिरेकौ विभाजकतयाऽवलम्ब्यापि महता प्रबन्धेन निरूप्यान्ते तयोर्विभाजकतां निरस्य स्वाभिमतमाश्रयाश्रयिभावमेवानवद्यं विभाजकधर्मं व्यवस्थापयति । एवं हि तदीयो ग्रन्थः ‘ एवं चेह चतुर्थं रूपकं श्लेषव्यतिरेकश्च । यदुक्तं तस्योक्तनयेन शब्दालङ्कारत्वमेव युक्तम् । एवमादौ शब्दमूलालङ्कारो न शब्दस्यालङ्कार इति चेत् । उक्तमत्र वैचित्र्यमलङ्कार इति । यद्वैचित्र्यं तस्यालङ्कार इति यथोक्तमेव साधु । भवन्तु वा परमेवंभूताः उभयस्यालङ्काराः नार्थस्येति विचार्यमेतद्विद्वद्भिः न तु झटित्येवासूयितव्यम् । ’ (पु. ४०) इति ।

एतेन चान्वयव्यतिरेकयोः तत्त्वेऽभ्युपगम्यमाने शब्दमूलालङ्कारत्वं भवेन्न शब्दस्यालङ्कारत्वमिति वदतः शब्दकार्यत्वं भवेदित्येवाक्षेपोऽभिसंहितः ।

आश्रयाश्रयिभावस्य च तत्त्वे वैचित्र्यमलङ्कारस्तस्य च शब्दाश्रितत्वेन शब्दालङ्कारत्वं लोकिकालङ्कारवदुच्यत इति समाधानमपि युक्तमित्यलङ्कारसर्वस्वकाराद्दतः जयरथेन च सूचित उद्भटविवेकगतोऽलङ्काराणामाश्रयाश्रयिभावाधीनविभागविचारप्रकारः प्रकृतग्रन्थमेवोद्भटविवेचनाय प्रवृत्तं कटाक्षयति । एतेन चास्य ग्रन्थस्य राजानकतिलकप्रणीतताऽव्याहता यथाजयरथनिर्देशं सिद्ध्यति । जयरथानुवादयोश्चैकः शब्दतोऽन्योऽर्थतः प्रकृतव्याख्यायां समुपलभ्यमानः, उद्भटसम्मतस्यार्थस्य विवेचनोद्भटविवेक इत्यभिधानौचिती च प्रकृतव्याख्यायाः राजानकतिलकप्रणीतोद्भटविवेकाभिधानसम्भवानां द्रढयतः । एतेन च 'मुकुलोच्चयनं तेन क्वचिदपि कर्तव्यतां धत्ते ।' इत्येतद्व्याख्याप्रथमपद्यगतमुकुलोच्चयनशब्दमवष्टभ्य या काश्मीरकमुकुलभट्टप्रणीतत्वसम्भावनाऽस्या व्याख्यायाः कैश्चिदनुप्राणिता सा च न लेशतोऽप्यौचितीमनुधावति । यतः प्रतीहारेन्दुराजस्य प्रकृतव्याख्यात्राऽनूद्यमानस्यापि मुकुलभट्टो गुरुः । न हि मुकुलोऽनुवदेद्दूषयेद्वा प्रतीहारेन्दुराजस्य व्याख्याम् ।

## तिलकस्यान्योऽपि ग्रन्थः ।

न केवलमयमेक एव ग्रन्थः राजानकतिलकप्रणीतः । परन्त्वन्योऽपि कश्चिद्विस्तृतस्वतन्त्रोऽलङ्कारनिबन्धो भवेदेतेन प्रणीत इति सम्भावयितुमपि सन्ति निदानानि । राजानकजयरथ एवान्यत्र तिलकोक्तमर्थं स्मरति । न चायमर्थोऽत्र प्रबन्धे समुपलभ्यते । नचैतावता पूर्वोक्तानुवादसंवादाहितमतिरन्यथयितव्या । स्पष्टं हि जयरथः पूर्वोक्तानुवादयोः तिलकेनोद्भटविवेकेऽयमर्थः प्रपञ्चित इति कथयति । तृतीयानुवादश्च तिलकग्रन्थात्सङ्गृह्णन्नपि जयरथः नोद्भटविवेकगततया स्मरति येनात्र व्याख्यायामनुपलम्भेनोद्भटविवेकत्वमस्य ग्रन्थस्य निराक्रियेत । किंतु केवलं तिलकोक्ततया । अयञ्चानुवादोऽर्थात्तिलकस्य ग्रन्थान्तरप्रणेतृत्वमेव गमयति । अविप्रलम्भं चोद्भटविवेकगतत्वेनानूद्यमानावर्थौ पूर्वोक्तौ प्रकृतव्याख्यायां सम्भवत इत्ययमुद्भटविवेक एव । एवं हि पुनरनुवदति जयरथः 'एतदेव राजानकतिलकेनाप्युक्तम्' 'कारणसामग्र्यमिह बाधकत्वेनैव प्रतीयते । कार्यानुत्पत्तिस्तु बाध्यत्वेनेति ( पु. १२४ )' इति । इमां च तिलकोक्तिमनुरुध्यालङ्कारसर्वस्वे लेखकपरिकल्पितं पाठं कश्चित्प्रतिषिध्य पाठान्तरमुन्नयति विमर्शिनीकारः । पाठश्च 'विशेषोक्तौ कारणसत्तया कार्याभावस्यैव बाध्यमानत्वमुन्नेयम्' इत्येवंरूपः । विशेषोक्तिनिरूपणप्रस्तावे च प्रकृतव्याख्यायां विरोधालङ्काराद्भेदं प्रदर्शयितुं न बाध्यबाधकभावविचारः कृतो दृश्यत इति तिलकेन ग्रन्थान्तर एवैतादृशो विचारः

कृतो भवेत् इत्यभ्यूहितुं पार्यते। अतएव च जयरथेनैवोच्यमानं 'ग्रन्थकृच्च प्रायस्तन्मतानुवर्त्येव' इति ग्रन्थप्रतिपादितमलङ्कारसर्वस्वकारस्य प्रायः तिलकानुयायित्वमपि सङ्गच्छते। न हि तमेतमुद्भटविवेकमेवानुसृत्य राजानकरुचकेन तावान् ग्रन्थः प्रणीत इति सम्भावयितुं पार्यते यथा जयरथः कथयति।

निपुणं तु निरूप्यमाणे राजानकरुचकः प्रायस्तिलकानुवर्तीति जयरथकथने प्रायःपदमपि नितरां युज्यते। यतः क्वचिदेतद्ग्रन्थं विसंवदत्यपि रुचकः। पर्यायोक्ताप्रस्तुतप्रशंसयोश्च विषयविभागं विलक्षणमेव विरचयन् रुचकः 'येन लम्बालकः सास्रः' इत्युद्भटपर्यायोक्तोदाहरणे 'राजन्राजसुता न पाठयति मां' इति तिलकमम्मटयोरप्रस्तुतप्रशंसोदाहरणे च नूतनमेव पर्यायोक्तप्रकारं प्रपञ्चयति। एतद्व्याख्याता चोभयत्राप्यप्रस्तुतप्रशंसामेव पश्यति। एवं श्लेषस्य चोद्भटोपक्षिप्तमनवकाशादलङ्कारान्तरबाधकत्वमेतद्व्याख्याकाव्यप्रकाशादिषु प्रतिक्षिप्यमाणं महता प्रबन्धेन रुचकः प्रतिषिध्य प्राचां मतं साधयति यद्यपि स्वयं तन्मतं न विशेषतोऽनुगृह्णाति। एवं च क्वचिदेतद्ग्रन्थगतानां क्वचिदतथाविधानां तिलकोक्तानामपरत्रैतद्ग्रन्थविरुद्धानां चार्थानामलङ्कारसर्वस्वे दर्शनेन यथाजयरथं रुचकस्य प्रायस्तिलकानुसारितावगमेन च राजानकतिलकेनैव विस्तरेण प्रणीतोऽन्योऽपि ग्रन्थो मूलमलङ्कारसर्वस्वस्येति सम्भावयितुं पार्यते। अतएव चोद्भटोदाहरणानि रूपकदीपकाक्षेपार्थान्तरन्यासव्यतिरेकोत्प्रेक्षाश्लेषविरोधाप्रस्तुतप्रशंसासङ्करालङ्कारेषु निरस्यन् विशेषयन्वा विवृतिकारः उदाहरणान्तरदानाय प्रवर्तमानः बहुषु स्थलेषु किंचिदुदाहृत्यान्यदुन्नेयमिति परित्यजन् स्वीयग्रन्थान्तरे तेषां विस्तरनिरूपणं व्यञ्जयति। न सर्वाण्यप्यत्र सङ्क्षिप्तव्याख्यायामुदाहरति। तानि च तिलकाभिसंहितान्यन्यान्युदाहरणान्यलङ्कारसर्वस्वे विस्तरशो दृश्यमानानि सर्वस्वकारेण तिलकमतानुयायिना तिलकप्रणीतविस्तृतग्रन्थान्तरादेव सङ्गृहीतानीति कल्पयितुं पार्यते। ग्रन्थान्तरे विस्तरकथनादेवात्रैकमुदाहृत्यान्यान्येतादृशानि समुन्नेयानीति प्रकृतव्याख्यात्रा कथनमपि युक्तं भवति। इमानि चालङ्कारसर्वस्वोद्धृतान्युदाहरणान्यत्रापि दृश्यमानान्याकरसूच्यामन्ते निवेशितानि द्रष्टव्यानि।

## राजानकतिलकस्य जीवनकालः।

जयरथानूदितानां राजानकतिलकस्योद्भटविवेकग्रन्थभागानामत्र व्याख्यायां संवादसंभवेनायमेवोद्भटविवेको यो राजानकतिलकप्रणीततया प्रसिद्धिं

प्रापेति पूर्वोक्तप्रबन्धेन स्थितम् । अलङ्कारसर्वस्वादीनां प्रबन्धानां प्रणेता राजानकरुय्यकः रुचको वा राजानकतिलकस्य पुत्र इति प्रतीयते तदीयसहृदयलीलाख्यग्रन्थोपान्ते तथोपलम्भात्[१] । तिलकानुयायिता प्रायशो रुचकस्य जयरथेन निर्दिश्यमाना काव्यप्रकाशसङ्केताख्ये रुचकग्रन्थे च द्वितीयश्लोके ग्रन्थकारस्य तिलकादधीतसाहित्यविद्यत्वं च[२] निर्दिश्यमानमम्रुमर्थं द्रढयतः । एतावता च रुचकजनकस्तिलको रुचकात्पूर्वं भवितव्य इति रुचककाल एव तिलकसमयस्य निश्चित उत्तरावधिः ।

मङ्खकश्च श्रीकण्ठचरितप्रणेता रुचकमात्मनो गुरुं स्मरति[३] । स च काश्मीरकनरपतेर्जयसिंहस्य ( क्रिस्तु ११२८–११४९ ) सान्धिविग्रहिक आसीदिति क्रैस्तवद्वादशशतकस्य पूर्वभाग एव ( ११००–११३५ ) रुचकस्य तद्गुरोः वैदुष्यविलासकालः । अतएव काव्यप्रकाशसङ्केते माणिक्यचन्द्रः ११५८ तमक्रिस्तुवर्षे गूर्जरेषु लब्धप्रतिष्ठो बहुशोऽलङ्कारसर्वस्वमनुवदन्[४] रुचकस्य काश्मीरेभ्यो गूर्जरदेशं यावदुचितप्रसिद्धिप्राप्तिमभिद्योतयन् प्रायः पञ्चविंशतिवत्सरपूर्वभावं रुचकस्यानुमापयति । अमुं च रुचककालनिर्धारणमनुपपन्नं केचन पश्यन्ति । यतः श्रीकण्ठचरितान्मङ्खकप्रणीतात्कतिचन पद्यान्यलङ्कारसर्वस्वे समुदाहृतानि दृश्यन्ते[५] । मङ्खकश्चासावुक्तक्रिस्तुद्वादशशतकस्य मध्यमभागे ( ११२८–११४९ ) काश्मीरेषु जयसिंहराज्यशासनसमये सम्बभूवेति ११५० तमवत्सरादनन्तरमेव मङ्खकस्य गुरुणाऽपि रुचकेनालङ्कारसर्वस्वं शिष्यस्य पद्यान्युदाहृत्य प्रणीतमिति तद्रचनाकालो मङ्खकादनन्तरमुत्कृष्टव्यः इति ते मन्यन्ते[६] ।

न हीदं समञ्जसं प्रतिभाति । बहुग्रन्थप्रणेता खलु रुय्यकः मङ्खकस्य श्रीकण्ठचरितात्पद्यानि शिष्यसम्माननाय केवलमुदाजहारेति कल्पनातः गुरोः रुचकस्य वृत्तिग्रन्थ एव पश्चान्मङ्खकेन कतिचन पाठभेदानुदाहरणान्तरयोजनानि च सङ्कलय्य परिष्कृत इति कल्पनमेव युक्तियुक्तं पश्यामः । अत एव माणिक्यचन्द्रस्य ११५८ तमवत्सरेऽलङ्कारसर्वस्वादनुवादाः, जयरथेन शतकान्तरिते काले सर्वस्वं व्याकुर्वता क्रियमाणा लेखकप्रमादेन नूतनकल्पनाभिश्च सञ्जातसर्वस्वपाठभेदादिपूपालम्भाश्च सङ्गच्छन्ते[७] । अतएव च क्रिस्तु-

---

१. काव्यमालामुद्रिता. पञ्चम-गु. २. पि. वि. काणे. साहित्यदर्पणभूमिका. पु. ११०. ३. श्री. च. २५, २६–३०. ४. मैसूरमुद्रितः. पु. ३२१, ३५९. ५. पि. वि. काणे. पु. १०९. ६. पि. वि. काणे. पु. १११. ७. पु. ५०,६७, १०७,१२४, १२६.

त्रयोदशशताब्द्यां सर्वस्वं व्याकुर्वन् केरलपण्डितः समुद्रबन्धः मङ्खकमेव वृत्तिग्रन्थप्रणेतारं निर्दिशति। तदाद्यपद्ये च 'निजालङ्कारसूत्राणामि'ति स्थाने 'गुर्वलङ्कारसूत्राणामि'ति पाठं प्रकल्प्य 'इति मङ्खको वितेने काश्मीरक्षितिपसान्धिविग्रहिकः' इति च पद्यमन्ते संयोज्य बहुशो मङ्खकस्यैव वृत्तिग्रन्थप्रणेतृभावमनुवादैः सूचयति। प्रायेण दाक्षिणात्यादर्शपुस्तकेषु प्रान्ते मङ्खकस्यैव कर्तृता स्मर्यते यद्यपि कुमारस्वामिमल्लिनाथप्रभृतयश्च दाक्षिणात्याः रुचकमेवालङ्कारसर्वस्वप्रणेतारं मन्यन्ते। श्रीमानप्पयदीक्षितः बहुषु स्थलेषु रुचकं क्वचिच्चं मङ्खकं प्रकृतग्रन्थप्रणेतारं स्मरति। एभिश्च स्मरणैः मङ्खकादतिविप्रकृष्टकालभवैः श्रीकण्ठचरितपद्यानामलङ्कारसर्वस्वे समुपलम्भेन चैतावत्तु प्रतीयते यद्रुचककृतैव वृत्तिः पश्चान्मङ्खकेनापि तथा परिष्कृत्य प्राकाश्यं नीता यथा स एव तस्याः कर्तेति कैश्चिद्विभाव्येतेति। राजानकजयरथस्तु काश्मीरस्थप्रसिद्धिमनुरुध्य रुचकं, दाक्षिणात्यपण्डिताश्च मङ्खकपरिष्करणजनितप्रसिद्धिं पुरस्कृत्य तश्चालङ्कारसर्वस्ववृत्तेः प्रबन्धारममन्यन्तेति सर्वं समञ्जसम्। मङ्खकगुरुश्च रुचकः ततोऽपि निश्चितपूर्वभावः प्रायः ११००–११३५ तमक्रिस्तुसंवत्सराणां मध्ये प्रख्यातवैदुष्यो भवेदिति तस्यापि जनको गुरुश्च राजानकतिलकः ततोऽपि पञ्चविंशतिवत्सरेभ्यः पूर्वं प्राप्तप्रागल्भ्यो भवेदिति क्रिस्तु १०७५–११२५ तमवत्सराणां मध्ये तदीयप्रगल्भदशा भवेदित्ययमेवोद्भटविवेकस्यापि रचनासमय इत्यभ्युपेयम्।

## राजानकमम्मटतिलकयोः समसमयता।

अयं च कालनिर्णयः राजानकतिलकमम्मटयोः समसमयतां प्रायेण प्रत्याययेत्। राजानकमम्मटो हि भोजराजं स्मरंस्तदुत्तरकालिकः क्रिस्तु एकादशशतकमध्यभागादर्वाचीन (१०५०-११००) इति कल्प्यते। व्यक्तिविवेककाराभिनवगुप्तौ च तच्छतकपूर्वार्धभवावनुवदतश्च मम्मटस्यायं समयः सम्भाव्यमानो युज्यतेतराम्। काव्यप्रकाशश्च रुचकेन क्रिस्तुद्वादशशतकारम्भे व्याख्यात इति तत्काल एव मम्मटसमयस्योत्तरावधिः। एवं च मम्मटसमकालिको राजानकतिलकः न क्वचिदपि मम्मटं नाम्ना स्मरति। केवलं भामहोद्भटवामनरुद्रटाननुवदति नान्यं कञ्चिदालङ्कारिकम्। परन्तु भूयसा काव्य-

१. अनन्तशयनप्रकाशितः। २. चित्रमीमांसा. पु. १०.

प्रकाशोक्तानामर्थानां तदीयग्रन्थसन्दर्भतुल्यस्य च ग्रन्थभागस्य क्वचिदुदाहरणानां च तद्गतानामत्रोद्भटविवेके दर्शनेन काव्यप्रकाशादेवेमेऽर्था उद्धृतास्तिलकेनेति केचित्सम्भावयन्ति[1]।

सम्यक्तु समीक्ष्यमाणे यथादृष्टार्थानुसार्यप्येषां वचनं न सर्वथा प्रत्ययिततरं प्रतीयते। यतोऽयं तिलक आत्मोपज्ञान्येव पश्यतीमानि नूतनानि कल्पनानि न ग्रन्थान्तरादनूदितार्थानि। कामन्तु त एवार्थाः तान्येवोदाहरणानि त एव विचाराः काव्यप्रकाशेऽपि दृश्यन्ते येऽत्र निरूप्यन्ते। स्यादेतत्। उभयत्रापि ग्रन्थे विचारनिर्धारणयोः शैलीसमालोचनेन तु पार्यत एव पण्डितैः को वा स्वतन्त्रः कोवाऽनूदिताऽनयोरिति निर्धारयितुम्। काश्मीरदेशः खलु क्रिस्तुतृतीयशतकमारभ्य त्रयोदशं यावत् साहित्यविद्याविचक्षणैः काव्यालङ्कारविवेचकैः रीत्यात्मवादिभिः रसध्वनिप्राधान्यवादिभिश्च सहृदयैः पण्डितोत्तमैर्विभूषितः तत्तद्विद्यानाञ्चाध्ययनाध्यापननूतनार्थपरिकल्पनादिषु व्यापृतैश्च बहुश्रुतैर्व्याकुल आसीदिति तु प्रसिद्धमेवैतिहासिकानाम्। भामहोद्भटवामनानन्दवर्धनशङ्कुकलोल्लटभट्टनायकाभिनवगुप्तमहिमभट्टादिभिश्च बहव आत्मोपज्ञा अर्थाः कुतश्चित् कालादारभ्य पण्डितकुलेषु विचारिता अध्येयपरम्परायामानीता एव ते रसालङ्कारगुणरीतिध्वनिवादादयः ग्रन्थेष्वारोप्यन्ते न तु झटित्येव प्रतिभातमात्राः। अतएव चैते वादाः तत्तदुपज्ञा अपि पण्डितकुलेषु विचार्यतामानीताः एभिश्च विशेषतस्तत्पक्षपातिभिः ग्रन्थेष्वारोपिता इतीयानेव विशेषः। एवं भामहमारभ्य महिमभट्टं यावद्बहुभिः काव्यज्ञगोष्ठीप्रवर्तकैः नूतनालङ्कारगुणरीतिध्वन्यादिवादानां निर्वाहकैर्निर्धार्य ग्रन्थेष्वारोपिता एवार्थाः परिष्कृतसुगमया कयाचिच्छैल्या स्रजीव कुसुमानि समासूत्रिताः काव्यप्रकाशे दृश्यन्ते सह नूतनैः कैश्चिन्निर्धारणैः। एकादशे च शतकेऽध्ययनाध्येयपरम्परायामेतेऽर्था विशेषत आदृताः प्रसिद्धाश्च काव्यज्ञगोष्ठ्यामासन्नित्येत एव कुशलैः पण्डितैः स्वस्वनाम्ना ग्रन्थेष्वारोपिताः सह स्वीयैर्भिन्नभिन्नराद्धान्तैः। अतश्च समानकालिकयोः काश्मीरकयोर्मम्मटतिलकयोर्ग्रन्थेषु सरूपाणां विचाराणामुदाहरणानाञ्च दर्शनं नासंभावितं न वा परस्परग्रन्थावलोकनपूर्वकमेवेत्यैकान्त्येन वक्तव्यम्। समानेषु विचारेषु सिद्धान्तेषु चैतयोर्ग्रन्थभागाववलोक्यमानौ न तिलकस्य परकीयार्थानुवादितां लेशतोऽपि ज्ञापयतः। प्रत्युत मम्मटस्यैव तिलकोक्ता-

१. बनहट्टी का. सा. सं. भू. ३१.

र्थानुवादितामपि क्वचिन्निश्शङ्कनुमापयन्तीव । निदर्शनतया च कांश्चिद्विमर्शा-न्निर्दिशामः ।

सन्त्येव बहवो विचाराः ये ग्रन्थयोरेतयोः सरूपा बहुलमुपलभ्य-मानाः । तेषु च मम्मटोपज्ञत्वेनैतावताऽऽद्दतो योऽसौ शब्दार्थश्लेषसम्बन्धी भट्टोद्भटमतनिरसनपरः सिद्धान्तः स एव तिलकग्रन्थेऽपि समानो दृश्यते । तत्रैव किञ्चिद्विलोकयामः को वा पूर्वतनः प्रतीयत इति । उद्भटः खलु मन्यते शब्दार्थश्लेषावर्थालङ्कारौ स्वरभेदाभेदयुक्तशब्दप्रयोगमात्र-प्रयुक्तौ । इदञ्चोद्भटमतं निरस्यते मम्मटेन नवमोल्लासे तयोः शब्दान्व-यव्यतिरेकमात्रानुयायितया शब्दालङ्कारत्वमेव मन्वानेन । यच्चोद्भटेन श्लेष-स्यालङ्कारान्तरप्रतिभोत्पत्तिहेतोर्निरवकाशतयाऽलङ्कारान्तरबाधकत्वमुदाहर-णेषु प्रत्यपादि तत्रापि श्लेषस्य सावकाशत्वनिदर्शनेन शब्दश्लेषमूलकोदाहरणे-षु चोपमारूपकविरोधानामपि शब्दालङ्कारत्वमुभयालङ्कारत्वं वा व्यवस्थापितं मम्मटेन न श्लेषत्वम् । एवमलङ्काराणां शब्दार्थगतत्वेन विभाजकावन्वय-व्यतिरेकावभ्युपेत्याश्रयाश्रयिभावस्य तत्त्वं चाक्षिप्य तेनैव प्रत्यपेधि ।

एष च सर्वोऽप्यर्थः तिलकस्योद्भटविवेकेऽपि दृश्यमानः न परोक्ता-र्थानुवादितां तिलकस्य गमयति । किंतु मम्मटविलक्षणैरुदाहरणैर्विस्तृतविचारैः साभिनिवेशं कथनेन चार्थानां स्वोत्प्रेक्षितत्वमेव व्यञ्जयति । एवं हि दृश्यते तिलकग्रन्थः ' उक्तमत्र वैचित्र्यमलङ्कार इति । यद्वैचित्र्यं तस्यालङ्कार इति यथोक्तमेव साधु । भवन्तु वा परमेवंभूता उभयस्यालङ्काराः नार्थस्येति विचार्यमेतद्विद्वद्भिः न तु झटित्येवासूयितव्यम् । ' इति । अत्र च विचार्यमे-तद्विद्वद्भिः न तु झटित्येवासूयितव्यमिति ग्रन्थभागोऽस्य काव्यप्रकाशा-नवलोकनमेव व्यञ्जयति ।

ग्रन्थान्तरसमर्थितार्थानुवादी च ग्रन्थकारः नैवमाग्रहयालुरर्थनिर्णये भवेत् । असूया चान्येषां स्वोक्ते नूतनतमेऽर्थे सम्भाव्य निराक्रियमाणा तस्या-र्थस्येदंप्रथमतया स्वकल्पितत्वमन्यैरनभ्युपगतत्वं वा द्योतयन्ती काव्य-प्रकाशपूर्वभावमेतस्य ग्रन्थकारस्य व्यवस्थापयति । किं च श्लेषमूलानां रूपकविरोधोपमादीनां तिलकमते शब्दालङ्कारत्वमेव मुख्यतया सम्मतम् । उभयालङ्कारत्वपक्षस्तु तिलकेनानिच्छयाऽप्यभ्यनुज्ञायते केवलमर्थालङ्का-रत्वनिराकरणवैयग्रीपारवश्येन । असावेवोभयालङ्कारत्वपक्षः काव्यप्रकाशे उपक्षिप्यमाणस्तस्य तिलकसमसमयत्वं द्रढयति । नासूयितव्यमित्येवंरूपा-

ग्रहशब्दाश्च काव्यप्रकाशेऽदृश्यमानाः तस्य परोक्तार्थानुवादितामपि संभावयन्ति। सर्वथा च काव्यप्रकाशपश्चाद्भावोऽस्य ग्रन्थकारस्य न नियमेन निरूपयितुं पार्यते। परन्तु काव्यप्रकाशस्यैवैतदनुयायितासंभवः समर्थयितुं सुशकः। यतः आश्रयाश्रयिभावं शब्दार्थालङ्कारविभाजकमसौ तिलको मन्यते। तिलकानुयायी च रुय्यकोऽप्यमुमेवार्थमन्वयव्यतिरेकयोस्तत्त्वप्रतिक्षेपमुखेन व्यवस्थापयति। तद्व्याख्याता च जयरथः आश्रयाश्रयिभावस्य तत्त्वं तिलकग्रन्थे व्यवस्थापितं रुय्यकेनानुसृतमिति व्याचष्टे। रुय्यकश्च प्रायशस्तिलकानुयायीत्यपि तेनैव जयरथेन व्यवस्थापितम्। दशमोल्लासे च काव्यप्रकाशे आश्रयाश्रयिभावस्यालङ्कारविभाजकत्वं कैश्चित्कल्प्यत इत्युपक्षिप्य तस्यापि पक्षस्यान्वयव्यतिरेकानतिवर्तित्वेनोपेक्ष्यत्वमुक्तम्। को वाऽसावाश्रयाश्रयिभावस्यालङ्कारविभाजकत्ववादी यं मम्मटोऽनूद्य निराचष्टे?। किमेष तिलकः?। आश्रयाश्रयिभावस्य च तत्त्वकल्पनं तिलकं विनाऽन्येन कृतमद्य यावन्नोपलभ्यत इति तदनुवादिताऽपि मम्मटस्य सम्भावयितुं पार्यते। एवमन्वयव्यतिरेकयोरपि विभाजकतोपक्षिप्य तिलकेन प्रतिक्षिप्तेति संभवत्येव मम्मटतिलकयोः परस्परवार्ताभिज्ञयोः समसमययोरपि प्रकृते केवलं विभाजकधर्मविषये विरुद्धाभिसन्धिताऽन्येषु च नव्यालङ्कारिकपरिष्कृतार्थेषु समानाभिप्रायता।

एवं पुनरुक्तवदाभासलक्षणमुद्भटोक्तं बहुधाऽव्याप्त्यादिदोषाशङ्कया परिष्कृत्य तिलकेन यत्सिद्धान्तितं तदेव मम्मटेन सङ्क्षिप्ताक्षरैरभिहितम्। स च ग्रन्थः मम्मटस्य ‘भिन्नरूपसार्थकानर्थकशब्दनिष्ठमेकार्थत्वेन मुखे भासनं पुनरुक्तवदाभासः’ इत्येवंरूपः। अयं च सर्वोऽप्यर्थः विस्तरेण बहूनामुद्भटपुनरुक्तवदाभासलक्षणव्याख्यानानामनुवादनिरसनपूर्वकं तिलकेन स्वग्रन्थेऽवस्थापितः। मम्मटः किमेवं बहुव्याख्यातृविचारफलीभूतमर्थं तिलकेनैकीकृतं सङ्गृह्य प्रत्यपादयत् उत मम्मटसङ्ग्रहस्य विवरणं तिलकेन कृतमिति ग्रन्थद्वयावलोकनेन सुधियो विवेचयन्तु।

वयन्तु पश्यामो यदुद्भटविवेके महता प्रबन्धेन बहुव्याख्यातृपक्षानुद्भाव्य विचार्य च सिद्धान्तिता एवार्थाः सङ्गृह्य मम्मटेनोपयुक्ता इति। किंच पर्यायोक्ताप्रस्तुतप्रशंसयोर्व्यावृत्तविषयताव्यवस्थापने यद्यप्युभयोः समानोऽभिनिवेशस्तथापि तिलकेन ‘अन्येत्वाहुः’ ‘अपरे व्याचक्षते’ ‘उदाहरन्ति च’ इत्यादिनाऽनूद्यमानानि व्याख्यात्रन्तरकल्पनानि काव्यप्रकाशेऽनुपलभ्यमानानि तिलकस्यैव स्वातन्त्र्येणेतरमतनिरसनेन नूतनपक्षान्तरो-

पक्षेपकतां तथा तिलकस्यैव सिद्धान्तः मम्मटग्रन्थे सङ्क्षेपाद्दृश्यमानः मम्मटस्यैवोद्भटविवेकोक्तार्थानुवादितां च द्योतयतः । अत्र च वस्तुयाथातथ्यं ग्रन्थभागयोरनयोरवलोकनेन निपुणैरवधेयम् । एतैश्च निदर्शनैरिदमवगम्यते यत्तिलकेन स्वतन्त्रतया बहूनां पक्षाणामुपक्षेपणेन साग्रहं तेषां परीक्ष्य निरसनेन च ये सिद्धान्ताः समादरणीयतया व्यवस्थापिताः त एव मम्मटग्रन्थे विना पक्षभेदानां निरूपणं निरसनं वा संक्षिप्तवचनैर्निराग्रहं चावस्थापिता दृश्यन्ते, तथाऽन्वयव्यतिरेकाश्रयाश्रयिभावयोः शब्दार्थालङ्कारविभाजकत्वविप्रतिपत्तौ विज्ञातायामपि मतभेदावलम्बनमुभाभ्यां कृतमिति च ।

एवं स्थिते इदमत्र प्रतिभाति—यदिमौ मम्मटतिलकौ क्रिस्तुएकादशशतकान्तिमभागावस्थितौ, परस्परवार्ताभिज्ञौ, बहुषु चांशेषु समानाभिप्रायौ, क्वचिदेव च विप्रतिपन्नौ, एनयोश्च मध्ये तिलकेन प्रथमतो ग्रन्था व्यरचिषत, मम्मटस्तु पश्चात्तदुक्तार्थानप्यविरुद्धान सङ्गृह्य निवेशनेन स्वग्रन्थं प्राणैषीत्, समानेषु चार्थेष्वेकरूपाण्येव वाक्यान्युदाहरणान्यपि नियुयोजेति । एतेन च सङ्कराप्रस्तुतप्रशंसाव्यतिरेकश्लेषोपमाद्यलङ्कारेषु भूयसा ग्रन्थयोर्वाक्यसाम्यं दृश्यमानमप्युपपादितं भवति । दृश्यते चैवंरूपो वाक्यानुवादसम्प्रदायो हेमचन्द्रमाणिक्यचन्द्ररुचकादीनां श्लेषाद्यलङ्कारेषु काव्यप्रकाशाभिनवभारत्युद्भटविवेकादीनां वाक्यान्येव स्वग्रन्थेष्वनतिभेदं निर्दिशताम् । न चेदमत्र विस्मर्तव्यं यदसौ तिलको मम्मटसमकालिकात्काव्यप्रकाशैकदेशप्रणेतुरलकादत्यन्तं भिन्न इति । नहि तिलकालकयोर्नामैकदेशमात्रविकृत्याऽनन्यवद्भावः शङ्कनीयः । यतोऽयमलकः काव्यप्रकाशदशमोल्लासेऽलङ्काराणां विभाजकावन्वयव्यतिरेकौ निर्दिश्याश्रयाश्रयिभावस्य च तत्त्वं प्रत्याख्याति । तिलकश्चाश्रयाश्रयिभावमलङ्कारविभाजकमतोद्भटविवेकेऽभिमन्यते । रुचकजयरथौ च तमेव पक्षमवलम्बेते । अयं चालकः रुचकस्य काव्यप्रकाशसङ्केतग्रन्थादर्शपुस्तकप्रान्तनिर्देशानुसारेण काव्यप्रकाशपूरयितेति न खल्विदमविदितं वेदयितव्यम् ।

एवं प्रसिद्धप्रस्थानप्रवर्तकस्य मम्मटस्य केषुचिदंशेषु नातिमहदुद्भटविवेकादिग्रन्थेभ्योऽप्यनुवादसंभावनं राजानकतिलकस्य चाद्य यावदनासादितविख्यातेः मम्मटापेक्षितार्थसमर्पकत्वं वा निरूप्यमाणं न झटिति विदितमम्मटप्रागल्भ्यानां मोदाय कल्पेतेति जानत एवैतत्प्रस्तावनाप्रणेतुः प्रतिभातवस्तुयाथातथ्यस्यानाविष्करणमनुचितमिति प्रतीतिरेवेदंप्रवृत्तौ निमित्तमिति निपुणैर्निर्मत्सरैर्विभावनीयम् ॥

---

१. पीटर्सन् रिपोर्ट. २. पुटानि १३. १४. १९. पि. वि. काणे. पु. १०४—१०९.

# विषयसूची ।

श्रीः ।

भट्टोद्भटविरचितः

# काव्यालङ्कारसारसङ्ग्रहः ।

## विवृतिसमेतः ।

सर्वत्र विकस्वरता प्रमोददा भवति नायमेकान्तः ।
मुकुलोच्चयनं तेन क्वचिदपि कर्तव्यतां धत्ते ॥

पुनरुक्तवदाभासश्छेकानुप्रास एव च ।
अनुप्रासस्तथा(त्रिधा) लाटानुप्रासो रूपकं चतुः ॥ १ ॥
उपमा दीपकं चैव प्रतिवस्तूपमा तथा ।
इत्येत एवालङ्कारा वाचां कैश्चिदुदाहृताः ॥ २ ॥

वर्गैर्वर्गैरलङ्कारोपादानं चिरन्तनालङ्कारकृतामल्पदर्शितां प्रकटयितुम् । वक्तीति उच्यत इति च वाक् । शब्दोऽर्थश्च । तत्राद्य उभयस्य शब्दस्यार्थस्य च । ततस्त्रयः शब्दस्य । शेषास्त्वर्थस्यालङ्काराः । अनुप्रासस्त्रिधेति रूपकं चतुरिति च पश्चात्कर्तव्यमपि विभागप्रतिपादनं यदुद्देश एव कृतं तद्बहुलङ्कारकारदृष्टप्रभेदालङ्काराष्टकमत्र दर्शितमिति मुख्यत एवास्योपादेयताध्वननाय । अत एव कैश्चिदिति बहुवचनम् । भामहो हि द्विविधं रूपकं चानुप्रासं चावादीत् । 'परे' इत्यादिवक्ष्यमाणबहुवचनस्यायमेवाशयो ज्ञेयः । रूपकजात्युपलक्षितव्यक्तिगतप्रतीयमानभवतिक्रियाभ्यावृत्तिगणने चतुरित्यत्र 'द्वित्रिचतुर्भ्यः सुच्' (पा.५-४-१८) इति सुच् । तेन चतुर्भेदं रूपकमिति तात्पर्यार्थः ।

क्रमेण लक्षयति—

(१)

पुनरुक्तवदा(क्ता)भासमभिन्नवस्त्विवोद्भासिभिन्नरूपपदम् ।

अभिन्नं वस्तु वाच्यं ययोस्ते अभिन्नवस्तुनी । ते इव भासेते भिन्नरूपे पदे यत्रेति केचिद्व्याचचक्षिरे ।

'तनुवपुरप्यन्योऽसौ करिकुञ्जररुधिररक्तखरनखरः ।

तेजोधाममहत्पृथुमह(महःपृथुमन)सामिन्द्रो हरिर्जिष्णुः ॥' (का.प्र.पु.५३८)

इत्यादीनामसंग्रहो मा भूदिति समासे संख्या न विवक्षितेत्यन्ये ।

कालगलादिशब्दस्य पदत्वं नास्ति ।

'नलिनतामरसवत्य(पद्म)सांप्रतं गगनमणिरम्बरतलमलङ्करोति यत्(?)।'

इत्यादि च दृश्यत इत्यभिन्नवस्त्विवोद्भासते भिन्नरूपं पदं पदान्तराच्छब्दाद्वा तस्मादेकस्मादनेकस्माद्यत्रेत्यपरे समस्यन्ति ।

येनाभिन्नाभिधेयं तस्याभिधेयसंबन्धोऽङ्गीकार्यः । सिद्धे हि तस्याभिधेयवत्वे तदभिन्नाभिधेयत्वमस्य शक्यते वक्तुम् । न चात्र कालगलादिशब्दस्याभिधेययोगः । अभ्युपगते वा नात्र शितिकण्ठादिपदं नाभिन्नाभिधेयम् । अपित्वभिन्नाभिधेयमेव । श्रुते च शितिकण्ठादिपदे कालगलादिशब्दस्याभिन्नाभिधेयत्वभ्रमो नत्वश्रुते । तस्मात् भिन्नाभिधेयमप्यनभिधेयमपि वाऽभिन्नाभिधेयमिव भाति । अभिन्नवस्तुन इव पदान्तराच्छब्दाद्वा । तस्मादेकस्मादनेकस्माद्वा । तस्माद्भिन्नरूपं यत्रेत्येके विवृण्वते ।

'तदेव सुरताकृतम्' इत्यादौ यद्यपि न भाति पुनरुक्तिः, तथापि 'चकासत्यङ्गनारामा' (का. प्र. पु.५३६) इत्यादौ तस्याः प्रतिभासात्पदमर्थप्रतीतिकृत् । न तु सुप्तिङन्तमेवेति तुल्यकक्ष्यदृशः । एवञ्च पदमिति पदानीति वा समसनीयम् ।

काचिन्निर्दिश्यमानार्थान्वयिनी काचिदर्थसामर्थ्याक्षिप्तार्थान्वयिन्यभिधा भवतीति दर्शनायोद्देशे वर्तिं कृत्वा नेह प्रायुङ्क्त । एतद्दर्शनं चानन्वयोपमादिर्गम्यमानस्यापह्नुतिरूपकादिः वाच्यस्य भेदेन भिद्यत इति दर्शनार्थम् ।

काव्यस्यालङ्कार्यत्वाद्यद्यपि पुनरुक्तवदाभासनं पदस्थमलङ्कारस्तथापि समुपलब्धालङ्कारव्यपदेशहारादिविलक्षणतया काव्यपारतन्त्र्येणेहालङ्कारतेति प्रदर्शनाय काव्यमाश्रित्य पुनरुक्ताभासमिति स पुनरुक्तः (नापुंसकः) संस्कारः (?) ।

तस्योदाहरणम्—

ततः प्रभृति निःसङ्गो नागकुञ्जरकृत्तिभृत् ।
शितिकण्ठः कालगलस्सतीशोकानलव्यथः ॥ ४ ॥

ततः कामदहनादारभ्य देवो दिवसानत्यवाहयदिति वक्ष्यमाण-श्लोकेन संबन्धः । नागकुञ्जरो हस्तिवरः । कृत्तिश्चर्म । शितिर्नीलः । कालेन गलन्ती सतीशोकानलव्यथा यस्य सः । अतो नागपदेन कुञ्जरपदस्य शितिकण्ठेन(ण्ठपदेन) कालगलशब्दस्य पौनरुक्त्यसंभावनं यथाक्रमं समास-पर्यालोचनावलात् तकारान्तत्वेन च निवर्तत इति पुनरुक्तवदाभासः । नागशितिकण्ठपर्यायोपादानेऽप्यलङ्कारो न हीयत इत्यर्थोऽलङ्कार्यः । कुञ्जरकालगलशब्दपर्यायोपादाने तु नालङ्कारो भवतीति शब्दोऽलङ्कार्य इत्युभयालम्बनोऽयमलङ्कारः । 'तस्य राज्ञः सुमनसो विबुधाः पार्श्ववर्तिनः' । (का. प्र. पु. ५३६) इत्यादिरभङ्गः । 'अविवधदेहशरीरः' (का. प्र. पु. ५३५) इत्यादिश्च सभङ्गः शब्दालङ्कारः । पाठक्रमादर्थक्रमो बलीयानिति लक्षणा(न)न्तरमुदाहरणयोजना ।

अतएव

( २ )

(छेकानुप्रासस्तु द्वयोर्द्वयोः सुसदृशोक्तिकृतौ ॥ ३ ॥)

द्वयोर्द्वयोः सुसदृशोक्तिकृतौ द्वयोर्द्वयोर्वर्णयोः सुष्ठु-अदूरे सदृशोच्चारणे क्रियमाणे छेकानुप्रासो भवति । द्वयोर्द्वयोर्वर्णयोश्चात्र सादृश्योक्तेरलङ्कारता ।

'स्वार्थेऽवधार्यमाणेऽनेकस्मिन्नि'ति द्वयोर्द्वयोरित्यत्र द्विर्वचनम् । स्वार्थशब्देन वीप्साया निरस्तत्वान्न यावन्तोऽत्र द्विकास्तेषां सर्वेषामेव सदृशत्वं कार्यम् । साकल्ये हि वीप्सा भवति । अवधार्यमाणग्रहणात् द्वयोरेव । अनेकस्मिन्निति वचनाच्चासकृत् । तेनानेकस्याक्षरस्य द्विरुच्चारणं छेकानुप्रासः । रसाद्यनुगुणत्वेन प्रकृष्टो न्यास इत्यनुप्रासः । आलयवर्तिनो मृगाः पक्षिणश्च छेकाः । तेषामिवायमप्रौढत्वात् । छेका वा विदग्धाः ।

उदाहरणम्—

स देवो दिवसान्निन्ये तस्मिन् शैलेन्द्रकन्दरे ।
गरिष्ठगोष्ठीप्रथमैः प्रमथैः पर्युपासितः ॥ ५ ॥

कन्दरा गुहा । गरिष्ठा गुरुतमा । गोष्ठी विदग्धानामासनबन्धः । प्रथमैः प्रधानैः । प्रमथैर्गणैः । अत्र च द्वयोर्द्वयोः सुसदृशोक्तिः सुज्ञाना ।

अनुप्रासस्त्रिविधः । वृत्तिभेदात् । यद्वक्ष्यति सरूपेत्यादि (का. सा. सं. १–१२)। आसु तिसृषु तुल्यव्यञ्जनन्यासं भिन्नमनुप्रासं कवयो वदन्तीत्यर्थः।

आदौ वृत्तिं लक्षयति । तत्र--

शषाभ्यां रेफसंयोगैष्टवर्गेण च योजिता ।
परुषा नाम वृत्तिः स्याद्ध्ह्वन्याद्यैश्च संयुता ॥ ६ ॥

रेफोपलक्षितः संयोगः कर्कार्कादिः । णकारवर्जमिह टवर्गः । तस्य परुषत्वाभावात् । परुषवर्णारब्धत्वाच्च परुषा । वृत्तिः वर्तनम् । रसविषयो व्यापारः । अत्र परुषानुप्रासः । सरूपव्यञ्जनन्यासरूपानुप्रासपर्यालोचनया च शेनैव षेणैव वेत्याद्यवधारणं वदन्ति । शषयोरैक्यं नास्ति सरूपत्वं त्वस्त्येवेति शषाभ्यामेवेत्यवधारणमित्यन्ये । 'मिश्राः कवीन्द्रैः रचना अल्पदीर्घाः कार्या' इत्यन्यत्रोक्तेः ? । इह च 'केलिलोल' (का. सा. सं. १-११) इत्यादौ तथा दर्शनात् । बहुभिः शषादिभिः सर्वैरपि च कार्येति युक्ततरम् । एवमन्यतः (त्र) ।

उदाहरणम्--

तत्र तोयाशयाशेषव्याकोशितकुशेशया ।
चकाशे शालिकिंशारुकपिशाशामुखा शरत् ॥ ७ ॥

तोयाशयेषु सरस्सु सकलं कृत्वा विकासितानि पद्मानि यस्यां सा शरत् रराज । किंशारवः शूकानि ।

सरूपसंयोगयुतां मूर्ध्नि वर्गान्त्ययोगिभिः ।
स्पर्शैर्युतां च मन्यन्त उपनागरिकां बुधाः ॥ ८ ॥

तुल्यरूपैः संयोगैः क्क च त्तादिरूपैः । तथा स्पर्शैः कादिभिर्मावसानैः शिरसि प्रत्यासत्तेः ङञणनमात्मभिः स्ववर्गान्त्ययोगिभिः ङ्कञ्चण्टन्तम्भे-त्यादिभिः बद्धामुपनागरिकां वदन्ति । नागरिकयोपमिता उपनागरिकेति 'अवादयः क्रुष्टाद्यर्थे तृतीयये'ति समासः । अत्रोपनागरिकानुप्रासः

उदाहरणम्--

सान्द्रारविन्दबृन्दोत्थमकरन्दाम्बुबिन्दुभिः ।
स्यन्दिभिः सुन्दरस्यन्दं नन्दितेन्दिन्दिरा क्वचित् ॥ ९ ॥

घनकमलवनोद्गतघनमध्वेवाम्बु तस्य कणैः सुन्दरः स्यन्दो यत्र तथाभूतस्यन्दिभिः क्वचिदाह्लादितभ्रमरा शरत् । रैपोषं पुष्णातीतिवत् सामान्यः स्यन्दो विशेषितः ।

शेषैर्वर्णैर्यथायोगं ग्रथितां कोमलाख्यया ।
ग्राम्यां वृत्तिं प्रशंसन्ति काव्येष्वादृतबुद्धयः ॥ १० ॥

वृत्तिद्वयोपयुक्तवर्णेभ्योऽन्यैः यादिभिः निबद्धां कोमलापराभिधानां ग्राम्यां वृत्तिं ब्रुवते । लकारादिभिः सह वकारादयो न कार्या इति यथायोगमित्युक्तम् । कोमलवर्णारब्धत्वादत्यन्तकान्त्यभावाच्च कोमलानुप्रासो ग्राम्यानुप्रासो वा ।

उदाहरणम्—

केलिलोलालिमालानां कलैः कोलाहलैः क्वचित् ।
कुर्वती काननारूढश्रीनूपुररवभ्रमम् ॥ ११ ॥

कलैः मधुरैः । भ्रमो भ्रान्तिः । एवमेव तिस्रो वृत्तयः । अत्रानुप्रासः । तदाह—

(३)

सरूपव्यञ्जनन्यासं तिसृष्वेतासु वृत्तिषु ।
पृथक् पृथगनुप्रासमुशन्ति कवयः सदा ॥ १२ ॥

व्याख्यातम् ।

(४)

स्वरूपार्थाविशेषेऽपि पुनरुक्तिः फलान्तरात् ।
शब्दानां वा पदानां वा लाटानुप्रास इष्यते ॥ १३ ॥

अनुपलभ्यमानसुप्तिङ्कानां शब्दानां वा पदानां वा वर्णात्मकस्वरूपसाम्येऽभिधेयसाम्ये च तात्पर्यभेदाद्या पुनरुक्तिः सा लाटजनवल्लभत्वात् लाटानुप्रासः ॥

स पदद्वितयस्थित्या द्वयोरेकस्य पूर्ववत् ।
तदन्यस्य स्वतन्त्रत्वाद्द्वयोर्द्वै(वै)कपदाश्रयात् ॥१४॥
स्वतन्त्रपदरूपेण द्वयोर्वापि प्रयोगतः ।
भिद्यतेऽनेकधा भेदैः पादाभ्यासक्रमेण च ॥ १५ ॥

एष द्वयोः शब्दयोः द्वयोः पदयोः पदशब्दयोर्वा यदा भवति तदा पूर्ववत्त्रिभेदः । पदद्वयाश्रयत्वेनैकपदाश्रयत्वेन च शब्दाश्रयो द्विविधः । एक-

मिति(स्मिन्) पदे पदसमूहात्मके पादे च भावात् पदाश्रयो द्विविधः । एवं च पञ्चविधोऽयम् । तदुक्तम्—पदस्य लब्धात्मलाभस्य स्वतन्त्रव्यवहारं कृत्वा स इत्यादिना–इति व्याख्यानमसत् । यतो लाटानुप्रासः पुनरुक्तिः । न च शब्दपदानामीदृशी सा । यत्र हि शब्दानां च द्विः पदानां च द्विरभिधा सोऽस्या विषयो न्याय्यः । इह तु पद्मिनीशब्दस्यैव पुनरुक्तिः । न तु पद्मिनीरित्यस्य पदस्यापि । किंच 'शब्दानां वा पदानां वा' ( का. सा. सं. १–१३ ) इति वाशब्दमपास्यावृत्तिः कार्या । अलूनविशीर्णाभिधानं च प्रसजति ।

तस्मादित्थमेतत्–शब्दानां पदानां वेति द्वौ भेदौ । तत्र पदान्तरे पुनरुच्यमानः शब्दः परतन्त्रः स्वतन्त्रो वा । एकपदे परतन्त्र एवेति शब्दानां त्रिधा । (पदानां) पौनरुक्त्यस्य यथोक्तौ द्वौ भेदाविति पञ्च विभेदाः क्रमेणोक्ताः । तदुक्तम्—स इत्यादि । पुनरुच्यमानपरतन्त्रशब्दाश्रयः स पदद्वितयस्थितत्या द्वयोरिति लक्षितः ।

उदाहरणम्—

क्वचिदुत्फुल्लकमला कमलभ्रान्तषट्पदा ।
षट्पदक्वाणमुखरा मुखरस्फारसारसा ॥ १६ ॥

सारसा लक्ष्मणाख्याः पक्षिणः । अत्रोत्फुल्लनकर्तृत्वेन कमलशब्दः कमलभ्रान्तषट्पदेत्यत्र भ्रमणकर्तृभूतषट्पदाधारतयेत्यादितात्पर्यभेदे स्वरूपार्थैक्येऽपि पुनरुक्तिरिति लाटानुप्रासता । एवमन्यत्र दर्शनीयम् ।

एकेत्यादिना पुनरुच्यमानस्वतन्त्रशब्दाश्रय उक्तः ।

उदाहरणम्—

पद्मिनीः पद्मिनीगाढस्पृहयागत्य मानसात् ।
अन्तर्दन्तुरयामासुर्हंसा हंसकुलालयात् ॥ १७ ॥

मानसं सरोविशेषः । दन्तुरयामासुः उन्नतदन्ता इव चक्रुः ।

द्वयोरित्यादिनैकपदोपात्तपुनरुच्यमानशब्दत्वेनोक्तः ।

उदाहरणम्—

जितान्यपुष्पकिञ्जल्ककिञ्जल्कश्रेणिशोभितम् ।
लेभेऽवतंसतां नारीमुखेन्दुष्वसितोत्पलम् ॥ १८ ॥

श्रेणिः पङ्क्तिः । अवतंसः कर्णाभरणम् ।

स्वतन्त्रेत्यादिना पद(दाश्रयत्वेनोक्तः ।) उदाहरणम्—

काशाः काशा इवाभान्ति सरांसीव सरांसि च ।
चेतास्याचिक्षिपुर्यूनां निम्नगा इव निम्नगाः ॥ १९ ॥

काशाः पुष्पविशेषाः । आचिक्षिपुः आवर्जयामासुः । निम्नगा नद्यः ।

पादाभ्यासक्रमेण चेति पादयोः क्रमग्रहणं द्वितीयचतुर्थप्रथम-तृतीयपादाभ्यासे लाटानुप्रासस्य बाहुल्यदर्शनाय ।

उदाहरणञ्च—

स्त्रियो महति भर्तृभ्य आगस्यपि न चुक्रुधुः ।
भर्तारोऽपि सति स्त्रीभ्य आगस्यपि न चुक्रुधुः ॥ २० ॥

आगसि अपराधे । चक्रुधुः सकोपा अभवन् ।

यस्य च सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ।
यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ॥

इति दर्शनात् पादशब्दोऽत्र पदसमूहोपलक्षणपरः ।

(५)

श्रुत्या संबन्धविरहाद्यत्पदेन पदान्तरम् ।
गुणवृत्ति प्रधानेन युज्यते रूपकं तु तत् ॥ २१ ॥

यत् पदेन पदान्तरं संबध्यते तद्रूपकम् । नन्वेवं वृक्षो भातीत्यत्र प्रसङ्ग-इत्यत्राह—गुणेषु धर्मेषु वर्तमानम् । एवमपि नीलोत्पलमित्यत्र प्राप्तिरि-त्यत्राह—श्रुत्येत्यादि । श्रुतिर्निरन्तरार्थनिष्ठः शब्दव्यापारः । तत्प्रतिपादि-तोऽर्थ इह उपचारात् श्रुतिः ।

'क्रियया योऽभिसंबन्धः स श्रुतिप्रापितस्तयोः ।
आश्रयाश्रयिणोर्वाक्यान्नियमस्त्ववतिष्ठते ॥' (वाक्यपदीय ३–७५)

इति न्यायात् 'अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति' इत्यादौ अरुणादिक्रियाद्योरेव तृतीयाप्रतिपादने संबन्धस्य श्रौतत्वात् तदभावेऽप्यरुणैकहायन्यादीनां वाक्यीयसमन्वयसद्भावात् न श्रौतसंबन्धा-भावमात्रात् न ( तद् ) भवति । गुणवृत्तित्वमिति हि मुख्यार्थबाधः ।

तेन श्रौतेनार्थेनार्थान्तरस्यार्थाद्यो वाक्यीयसमन्वयः तदभावे यदा स्वगतं-गुणसमगुणवृत्तिर्भवति । उपमानोपमेययोर्गुणैरिव गुणानामपि धर्मान्तरेण साम्यकल्पनायां त्वनवस्था । पदस्य श्रौतेनार्थेन श्रुत्या संबन्धो भवत्येवेति तदभावो न व्याख्येयः ।

नन्वेवं सामानाधिकरण्याभावे यदेकस्य गुणवृत्तित्वं कल्प्यते तत्पर्यायेण प्राप्तम् । नियमे कारणाभावादित्यत आह–प्रधानेनेति । प्रधानस्य च गुणवृत्तिता न भवति । प्राधान्यहानेः । प्राधान्यं च प्राकरणिकत्वात् ज्ञेयम् । अन्यथा गुणवृत्तेः प्रधानेनैव संबन्धे तद्वचनमनर्थकं स्यात् । तदेवं श्रौतेनार्थेनानुपपद्यमानार्थान्तरसंबन्धमतएव साधारणान् गुणान् लक्षयित्वा पदान्त(रा)र्थादुपसर्जनमप्राकरणिकार्थाभिधायि प्राकरणिकार्थाभिधायिना पदेन गौणेन व्यापारेण संबन्धं भजते यत् तद्रूपकम् । आरोप्यमाणरूपेणारोपणविषयस्य रूपवतः क्रियमाणत्वात् ।

अत्र केचित् शब्दारोपपूर्वमर्थारोपं ब्रुवते । अपरे विपर्ययम् । अन्ये यौगपद्येनोभयम् । एष एव च युक्तः पक्ष इत्याहुः ।

तस्य च वक्ष्यमाणरूपभेदाभ्यां सह नामद्वित्वेऽपि प्राक् प्रतिज्ञातं चतूरूपत्वं स्थितमेव ।

तदाह—

बन्धस्तस्य यतः श्रुत्या श्रुत्यर्थाभ्यां च तेन तत् ।
समस्तवस्तुविषयमेकदेशविवर्ति च ॥ २२ ॥

तस्येत्युपचारात्तत्संबन्धिनाविहोच्येते उपमानोपमेययोः । सामानाधिकरण्यसंबन्धात्मना रूपकस्य श्रौतत्वाभावात् । तेन तत्संबन्धिनोर्यतः शाब्दो बन्धः । तत्समस्तमारोप्यारोपविषयात्मकमुभयं वस्तु विषयः शाब्दमस्येति समस्तवस्तुविषयम् । श्रुत्या सामर्थ्येन च यदा बन्धः तेन कारणेनैकदेशे विशेषेण शब्देन क्रमेण वर्तत इत्येकदेशविवर्ति ।

आद्यस्योदाहरणम्—

ज्योत्स्नाम्बुनेन्दुकुम्भेन ताराकुसुमशारितम् ।
क्रमशो रात्रिकन्याभिर्व्योमोद्यानमसिच्यत ॥ २३ ॥

शरितं शबलितम् । अत्राम्बुत्वज्योत्स्नात्वाद्योरेकार्थवृत्त्यभावाद-नुपपद्यमानसामानाधिकरण्यान्यतएव साधारणप्रसरणशीलत्वादिगुणवृत्ती-न्युपसर्जनान्यम्ब्वादीनि पदानि प्राकरणिकत्वात् प्रधानैः ज्योत्स्नादिपदैः संबध्यन्त इति रूपकम् ।

ननु ज्योत्स्नाम्बुनेत्यत्राम्बुनः प्राधान्यम् । तथाहि-अत्र येयमसि-च्यतेति क्रिया तयाऽम्ब्वेव साधनमपेक्षितं ज्योत्स्नया विशेष्यते । तेन ज्योत्स्ना गुणवृत्तिः । नैतत् । यतोऽसिच्यत इत्यनेन व्याप्तिर्लक्ष्यत इति यथोक्तमेव स्थितम् ।

यत्तूक्तम्—

'उपसर्जनोपमेयं कृत्वा तु समासमेतयोरुभयोः ।

यच्च प्रयुज्यते तद्रूपकमन्यत् समासोक्तम् ॥' (रुद्रट-का० ८—४०)

इति । एतयोरित्युपमानोपमेययोः । तच्छाब्दप्रक्रमानुसारेण । शाब्दे हि क्रमे सिंहो माणवक इत्यादौ सिंहादिरूपावच्छादितो माणवकादिरप्रधान-भूतः प्रतीयते । वास्तवनयानुसारे तूक्तरीत्याऽस्य गुणवृत्तित्वम् । अतएव शाब्दनयानुसारेणासिच्यतेति क्रिया समुचिता । एतत्क्रियोपादानसामर्थ्या-च्चाम्ब्वादीनां प्राधान्यमिति रूपकपरिग्रहे न्यायोऽस्ती'त्यनेकालङ्कियोल्लेख (का. सा. सं. ५-२०) इत्यादिसंकरलक्षणं भव(ति) तदा(नीम्) ।

एवं सति-द्वे तत्रावस्थे । तत्र ज्योत्स्नाप्राधान्ये रूपकम् । अम्बुप्रा-धान्येऽतिशयोक्तिच्छाया-इति व्याख्यानमसत् । एकस्मिन् वाक्येऽवस्था-द्वयाप्रतिपत्तेः ।

अत्र च सर्वेषामारोप्यमाणानां (शाब्दो बन्ध इति समस्त-) वस्तुविषयता ।

द्वितीयस्योदाहरणम्—

**उत्पतद्भिः पतद्भिश्च पिञ्छालीवालशालिभिः ।**

**राजहंसैरवीज्यन्त शरदेव सरोनृपाः ॥ २४ ॥**

पिञ्छाल्यः पक्ष्मपङ्क्तयः । राजहंसाः रक्तचञ्चुपादा हंसाः । वीजे-र्धातुष्वपाठे(पि शिष्टप्रयोगाद्धातु)त्वम् । अत्र पिञ्छालीनां वालत्वेन सरसां नृपत्वेन तस्य विशेषेण प्रकृतार्थारोपेण वर्तनादेकदेशविवर्तिरूपणं स्वक-

ण्ठेनोक्तम् । राजहंसानां चामरत्वेन शरदश्च नायिकात्वेनार्थसामर्थ्यादित्येकदेशविवर्तित्वम् ।

चक्रवाककुचाभोगा नीलनीरजलोचनाः ।
अम्भोजिनीनितम्बिन्यो हसन्ति सरसीरुहैः ॥

इत्यादौ एकदेशात् विवर्तते चलतीति एकदेशविवर्तित्वम् ।

अन्ये त्वाहुः—चामराणामार्थत्वं राजहंसानां तु शाब्दत्वमित्येकदेश उपमेयात्मनि विशेषेण वर्तनादेकदेशविवर्ति । एवं च पिञ्छालीवालेत्यादि समस्तवस्तुविषयाविनाभावि । समस्तवस्तुविषयं तु निरपेक्षम् । ज्योत्स्नाम्बुनेत्यादौ तु सावयवे रूपके अवयवानां यद्यप्यवयव्यपेक्षा तथापि नि(न)रूपणं परतन्त्रम्(इति) । एवं द्वावेतौ भेदौ ।

अन्यावाह—

**समस्तवस्तुविषयं मालारूपकमुच्यते ।**
**यद्वैकदेशवृत्ति स्यात् पररूपेण रूपणात् ॥ २५ ॥**

यद्वा—समुच्चयेनास्तानि क्षिप्तानि वस्तूनि विषयोऽस्येति मालारूपकं समस्तवस्तुविषयमुच्यते । एकस्यैव रूपकमालान्यासाच्च मालारूपकत्वम् ।

उदाहरणम्—

**वनान्तदेवतावेण्यः पान्थस्त्रीकालशृङ्खलाः ।**
**मारप्रवीरासिलताः भृङ्गमालाश्चकाशिरे ॥ २६ ॥**

वनान्तो विपिनैकदेशः । वेण्यः केशपाशाः । कालशृङ्खलाः कालेन प्रयुक्ता निगलविशेषाः । मारप्रवीराः कन्दर्पभटाः । असिः खड्गः । अत्र भृङ्गमालानामेव रूपमालान्यासात् समस्तवस्तुविषयता ।

तथा च परेणार्थान्तरेण यो रूपो रूपणमर्थात् प्रकृतस्यार्थस्य तेन निमित्तेन यद्रूपणं तस्मादेकदाऽन्याद(न्यदे)शो योऽर्थः तत्र वृत्तिर्यस्य तत् ।

परस्यार्थान्तरस्य यद्रूपकं कारकछन्दं तेन रूपणात्-इति तु व्याख्यानमयुक्तम् । एवं हि विशिखैर्भूष्यन्ते स्मेत्यसंबद्धोऽर्थः स्यात् ।

उदाहरणम्—

**आसारधाराविशिखैः नभोभागप्रभासिभिः ।**
**प्रसाध्यते स्म धवलैराशाराज्यं वलाहकैः ॥ २७ ॥**

आसारो वेगवद्वर्षः । विशिखाः शराः । अत्र प्रसाध्यत इति भूषणे वर्तते । शरद्वर्णनस्य प्रस्तुतत्वात् । यत्त्वस्यानेकार्थत्वादर्जनमर्थान्तरं तेन भूषणे रूपिते सति विशिखादिभिरुपपद्यते रूपणम् ।

स्पष्टमिदमुदाहरणम्—

मेरूरुकेसरमुदारदिगन्तपत्रमामूललंबिचलशेषशरीरनालम् ।

येनोद्धृतं कुवलयं ललता सलीलमुत्तंसकार्थमिव पातु स वो वराहः ॥

एवं च 'साऽऽनन्दजलधिशशिलेखे '(रुद्रट-काव्या० ८. ५१)तिवत् कुवलयं कुवलयं कुवलयमेवं भूतमिति रुद्रटोक्तपरम्परितरूपकाभमेतत् । अत्र शब्दमुखेनार्थस्य विचित्रत्वेऽपि मुख्यतः कविप्रतिभासंरम्भगोचरस्य शब्दस्य वैचित्र्यमिति शब्दालङ्कारत्वं युक्तम् । ग्रन्थगौरवभयात्तु न प्रतनुमः । किंचित्तु श्लेषस्थाने वक्ष्यामः ।

(६)

आदिमध्यान्तविषयाः प्राधान्येतरयोगिनः ।

अन्तर्गतोपमा धर्मा यत्र तद्दीपकं विदुः ॥ २८ ॥

सामर्थ्यावसेय उपमानोपमेयभावो येषु सत्सु तादृशाः । विषयशब्दस्यान्यत्र भावार्थत्वात् । भावश्च (आदावेव वा) मध्य एव वाऽन्त एव वा । न त्वसकृदवस्थिताः । धर्माः क्रियादिरूपाः । यत्र दीपने तत् दीपकम् । प्रकाशवदेकस्थमनेकोद्दीपनात् दीपकम् ।

अन्तर्गतोपमा इत्यनेनैव गतार्थत्वात् प्राधान्येतरयोगिन इति विस्पष्टार्थम् । उपमेयं हि प्रधानमुपमानन्त्वितरत्–इति व्याख्यानमसत् । तुल्ययोगिता(न)भिधानार्थमेतस्योपात्तत्वात् । तत्र हि सर्वाणि प्राकरणिकान्येवाप्राकरणिकान्येव वा । प्राकरणिकार्थाविस्पष्टार्थमुपमेयम् । प्राकरणिकानां तूपमेयाद्दीपकम्(?) ।

आद्यस्योदाहरणम्—

संजहार शरत्कालः कदम्बकुसुमश्रियः ।

प्रेयोवियोगिनीनां च निःशेषसुखसंपदः ॥ २९ ॥

अत्र संहरणमादावुपात्तो धर्मः । सुखसंपदामुपमानत्वं कुसुमश्रियां चोपमेयत्वमार्थमित्यादिर्दीपकः । कालशब्दोऽनन्त(न्तक)वृत्तिः संहर्तृतां ध्वनयन् साकूतः ।

मध्यस्योदाहरणम्—

विदेशवसतिर्यातपतिकाजनदर्शनम् ।
दुःखाय केवलमभूच्छरच्चासौ प्रवासिनाम् ॥ ३० ॥

यातपतिकाः प्रोषितभर्तृकाः । अत्र दुःखायाभूदिति मध्यो धर्म उपात्तः । शरदत्र प्राकरणिकीत्युपमा प्राग्वद्योज्या ।

अन्त्यस्योदाहरणम्—

तदानीं स्फीतलावण्यचन्द्रिकाभरनिर्भरः ।
कान्ताननेन्दुरिन्दुश्च कस्य नानन्दकोऽभवत् ॥ ३१ ॥

अत्रानन्दकत्वधर्मो निबद्धः । इन्दुः प्राकरणिक इत्युपमा योज्या ।

सर्वेषामेवात्र प्राकरणिकत्वात् तुल्ययोगितायाा एतान्युदाहरणानि योग्यानीति—

[1]रेहइ मिहिरेण णहं रसेण कव्वं सरेण जोव्वणअम् ।
अमएण सुधीधवलो(ओ) तुमए णरणाह भुवणमिणम् ॥

इत्यादीन्युदाहरणानि देयानि ।

वृत्तानुरोधादुपमा प्रागुपदिष्टाऽपि स्वयंकृतकुमारसंभवाख्यकाव्यसंगत्यनुरोधाद्दीपकस्य पश्चाल्लक्षिता । परिवर्तने चोत्तरत्रायमेव विशेषो ज्ञेयः ।

(७)

यच्चेतोहारि साधर्म्यमुपमानोपमेययोः ।
मिथोऽविभिन्नकालादिशब्दयोरुपमा तु तत् ॥ ३२ ॥
यथेवशब्दयोगेन सा श्रुत्याऽन्वयमर्हति ।
सदृशादिपदाश्लेषादन्यथेत्युदिता द्विधा ॥ ३३ ॥
संक्षेपाभिहिताऽप्येषा साम्यवाचकविच्युतेः ।
साम्योपमेयतद्वाचिवियोगाच्च निबध्यते ॥ ३४ ॥

---

१. राजते मिहिरेण नभो रसेन काव्यं स्मरेण यौवनकम् ।
अमृतेन सुधीधवल(सुधीधवः ?)स्त्वया नरनाथ भुवनमिदम् ॥

उपमानोपमेयोक्तौ साम्यतद्वाचिविच्यवात् ।
क्वचित्समासे तद्वाचिविरहेण क्वचिच्च सा ॥ ३५ ॥
तथोपमानादाचारे क्यच्प्रत्ययबलोक्तितः ।
क्वचित्सा कर्तुराचारे क्यङा साथ(च)क्विपा क्वचित् ॥ ३६ ॥
उपमाने कर्मणि वा कर्तरि वा यो णमुल् कषादिगतः ।
तद्वाच्या सा वतिना च कर्मसामान्यवचनेन ॥ ३७ ॥
षष्ठीसप्तम्यन्ताच्च यो वतिर्नामतस्तदभिधेया ।
कल्पप्प्रभृतिभिरन्यैश्च तद्धितैः सा निबध्यते कविभिः ॥३८॥

'समासकृत्तद्धितेषु संबन्धाभिधानमि'ति समानेन धर्मेण संबन्धः । उपमितिरुपमा । सा च न कार्यकारणाद्योर्भवति । अपि तूपमानोपमेययोरेवेति गतार्थमप्युपमानोपमेययोरिति वचनमार्थे साम्ये प्रसिद्धिरनुमन्तव्येति प्रतिपादनाय । तेन यथा मुखं कमलमिवेति क्रियते न तथा साधारणधर्मप्रयोगं विना मुखं कुमुदमिवेति । 'उपमितं व्याघ्रादिभिः सामान्याप्रयोग' (पा–२–१–५६) इतिवदेकतरोपादानेऽप्ययमर्थः सिध्यतीत्युभयोपादानं द्वयोरपि सिद्धस्वभावत्वे उपमा कार्येति दर्शनाय । तेन—

'निर्जग्मुः कार्मुकात्तस्य पत्रिणः प्राज्यतेजसः ।
वारिधाराः सहस्रांशोर्ज्वलन्त्यो मण्डलाद्यथा ॥' इत्यादेर्निरासः ।
'चण्डालैरिव युष्माभिः साहसं परमं कृतम् ।' इति जातिन्यूनत्वे,
'वह्निस्फुलिङ्ग इव भानुरयं चकास्ति ।' इति प्रमाणन्यूनत्वे,
'स मुनिर्लाञ्छितो मौञ्ज्या कृष्णाजिनपटं वहन् ।
व्यराजन्नीलजीमूतभागाश्लिष्ट इवांशुमान् ॥' इति तटिद्रूपधर्मन्यूनत्वे,
'विशन्तु विष्टयः शीघ्रं रुद्रा इव महौजसः ॥' इ(ति जा)त्याधिक्ये,
'पातालमिव नाभिस्ते स्तनौ क्षितिधरोपमौ ।
वेणीदण्डः पुनरयं कालिन्दीगात्रसंनिभः ॥' इति प्रमाणाधिक्ये,
'सलाञ्छनेन्दुबिम्बाभं मुखं भाति मृगीदृशः ।' इति धर्माधिक्ये,
'सरश्मि चञ्चलं चक्रं दधद्देवो व्यराजत ।
सबान्ध(ड)वाग्निः सावर्तः स्रोतसामिव नायकः ॥'

इति धर्मन्यूनाधिकत्वे 'भयेनेव स्मरेणेयमहो स्विद्यति वेपते।'

इति प्रसिद्धिविरोधे चोपमा न विधेयेति प्रतिपादनाय चेतोहारिग्रहणम्। न त्वलङ्कारप्रस्तावात् सत्त्वप्रमेयत्वादिसाधर्म्यनिराकरणार्थत्वेनोपयुज्यते इति विस्पष्टार्थम्।

'राम इव भाति राजे'ति कालभेदे, 'हरिरिव भासि राजन्नि'ति पुरुषभेदे, 'प्रतपतु भवान् प्रभाकर इवे'ति विध्यादिभेदे, 'चन्द्रकलेव सुगौर' इति लिङ्गभेदे, 'पिबत्याननमेतस्याः पुष्पं मधुलिहो यथा' इति वचनभेदे यदा साधारणशब्दभेदः तदापि न कार्योऽयमिति दर्शनाय मिथ इत्याद्युक्तम्।

मिथः अन्योन्यगतत्वेन वर्तमानोऽर्थात् साधारणः अविभिन्नकालादिः शब्दो ययोरित्यकारप्रश्लेषः। न तु—भिन्नप्रवृत्तिनिमित्तयोः—इति व्याख्येयम्। जात्यादीनां प्रवृत्तिनिमित्तत्वे(पि) कालत्वे(स्य) तथात्वाप्रसिद्धेः। मुख्यशब्दत्यागेनोपलक्षकशब्दग्रहणस्य निरर्थकत्वापत्तेः। मिथ इत्यस्यानुपादेयत्वप्राप्तेः। सोश्वसु वा(श्वःसुसा)श्वेन समः सु(स)सत्त्व (?) इत्येकत्वाभावेऽनन्वयत्वानुपपत्तौ उपमारूपत्वा(त्व)प्रसङ्गाच्च।

ननु राम इवायं राजा भातीति, भासि त्वं हरिरिवात्रनिनाथेति, दहतु भवान् दहन इव विद्विषः समग्रानिति, स्त्रीवायं नैव गुण(गण्य)त इति, सरसिजवनमिव नयने तस्याः स्वरमुच्चकैस्तनुते इति किं दुष्टं मनो दुष्टम् (किं दुष्टम्। नो दुष्टम्।) एवंविधे विषये प्रतीयमानधर्मनिमित्तोपमानसंबन्धादनन्तरमुपादीयमानधर्मेणाभिसंबन्धात्। अन्यथा दुःसमन्वयात्।

ननु युधिष्ठिर इवायं सत्यं वदतीत्युपात्तेनैव समानेन धर्मेणोपमायाः प्रतीतेः कथमेतदुक्तं संगच्छते। युधिष्ठिर इवायं सत्यवादी सत्यं वदतीति प्रतिपत्तेः संगच्छत एवैतत्। सत्यं वदति सत्यवादीति च न पौनरुक्त्यमाशङ्कनीयम्, रैपोषं पुष्णातीतिवत् युधिष्ठिरवत् सत्यवदनेन सत्यत्राध्ययमित्यर्थान्तर(प्रतीतेः)। एतच्च स्थितेषु प्रयोगेषु समर्थनम्। न तु सर्वथा निरवद्यम्।

'कान्तिमद्वदनं कान्ते राकाकामुकवत्तव' इत्यादौ कृत्वाऽप्युपमाने विभक्तिविपरिणामं साधारणधर्मस्य लिङ्गविपरिणामः कार्य इति दुष्टत्वमेव।

'सरोरुहपदेना(वदेणा)क्षि मुखं ते कमलाकुलम्' इत्यादौ तु साधारणधर्मो न विरुद्ध इत्युपमान(वि)परिणामोऽपि न दोष इति केचित्।

'यदनेकपयोधिभुजस्तवैव सदृशोऽस्यहीनसुरतरसः ।
ननु बलिजितः कथं ते सदृशस्तदसौ सुराधिकृतः ॥'(रुद्रट–४, ३३.)
'पररुधिरमोदितरुचि त्वयि सममसिपत्रमेतदाभरणम् ।
वेदनवसुधा भवतैव भवन्मतिः(प्रभो तुल्या) ॥'

इति निपुणप्रयोगदर्शनात् सदोष एव विपरिणाम इत्यन्ये ।

एषा च द्विभेदा । संक्षेपाभिहिताप्येपेत्युक्तेः । पूर्णा लुप्ता च । आद्या त्रिधा–वाक्यसमासतद्धितगम्यत्वात् । प्रत्येकं श्रौतत्वार्थत्वभेदात् द्वैविध्यम् । एवं षट् पूर्णाभेदाः । लुप्तायास्तु वाक्यसमाससुब्धातुकृत्तद्धितावसेयत्वात् पाञ्चविध्यम् । वाक्यगम्यायाः श्रौतत्वार्थत्वभेदात् द्वैविध्यम् । समासगम्यायाश्च एकद्वित्रिलोपभेदात् साधारणधर्मलोपे श्रौतत्वार्थत्वभेदात् द्वौ भेदौ द्योतकलोपे त्वेक इत्येकलोपस्य भेदत्रयसद्भावात् पाञ्चविध्यम् । सुब्धातुगम्यायास्तु क्यच्-क्यङ्-क्विप्-प्रत्ययगम्यत्वात् क्यच्प्रत्ययगम्यायाश्च कर्माधिकरणोपमानत्वात् कर्मोपमानिकायाश्च एकद्विलोपात्मभेदद्वयवत्त्वात् पाञ्चविध्यम् । कर्मकर्त्रुपमानत्वेन कृदवसेया द्विधा । तद्धितगम्या त्वेकैव । एवं पञ्च(दश) लुप्ताभेदाः । पूर्णाभिः सहैकविंशतिः ।

तत्रोपमानोपमेयसाधारणधर्मोपमाद्योतकवाचकान्यतरलक्षणोपायचतुष्टयोपादाने पूर्णा । अत्रैकस्य द्वयोस्त्रयाणां वा लोपे लुप्ता । सा च यथेवोपादाने श्रौती । अन्यथा आर्थी । तदाह–यथेवेत्यादि । 'लोचनमिन्दीवरं वास्या' इति वाशब्दस्यापि दृष्टेः यथेवशब्दावुपलक्षणम् । अन्ययं हि लुप्तविभक्तिकमेकत्राप्यविश्रान्तमुभयगतसाम्यप्रतिपादनायालमिति तत्र श्रौती । तेन सदृश इत्युपमेय एव वा सदृशोऽस्येत्युपमान एव वा सदृशशब्दस्य विश्रान्तिरिति सादृश्यपर्यालोचनादुभयगतसाम्यप्रतीतिरिति तत्रार्थी ।

तत्र पूर्णा उदाह्रियते–तत्रापि श्रौती वाक्यगम्या समासगम्या च यथाक्रमं यथेवशब्दयोगे–

क्षणं कामज्वरोच्छित्त्यै भूयः संतापवृद्धये ।
वियोगिनामभूच्चान्द्री चन्द्रिका चन्दनं यथा ॥ ३९ ॥
नेत्रैरिवोत्पलैः पद्मैः मुखैरिव सरःश्रियः ।
तरुण्य इव भान्ति स्म चक्रवाकैः स्तनैरिव ॥ ४० ॥

अत्र चतुष्टयोपादानात् संपूर्णत्वम् । एवं च वक्ष्यमाणोदाहरणचतुष्टयेऽपि यथाशब्दयोगे वाक्यगम्यत्वम् । श्रौतत्वं तूभयत्रापि स्फुटम् । चन्द्रिकायाश्चन्दनमुपमानम् । अन्यैर्लिङ्गभेदे उपमायाः सर्वथा दोष उक्तः । तन्निरस्यति । साधारणशब्दो ह्यत्र न भिद्यते । तद्भेदे च दुष्टत्वम् ।

वाक्यगम्या त्वार्थी यथा—

प्रबोधाद्धवलं रात्रौ किञ्जल्कालीनषट्पदम् ।
शशाङ्कबिम्बेन समं बभौ कुमुदकाननम् ॥ ४१ ॥

इति पाठे । समासगम्यायां त्वार्थ्यामेतदेवोदाहरणं शशाङ्कबिम्बप्रतिममिति पाठे ।

तद्धितावसेया च द्विरूपा । 'तत्र तस्येव'(पा.५-१-११६)इत्यनेन यो वतिः स इवार्थे क्रियत इति श्रौतत्वम् । 'तेन तुल्यम्' (पा०५-१-११५) इत्यादिना यो वतिः स आर्थत्वकृत् । तदुक्तम्—षष्ठीसप्तम्यन्तादित्यादि । वतिना चेत्यादि । नामतः प्रातिपदिकात् । कर्मसामान्यं क्रियासामान्यम् । तत्र श्रौती तद्धितगम्या यथा—

किंस्विदुत्कलिका मद्वत् तस्या अपि निरर्गलाः ।
अकाण्डोड्डामरानङ्गहतकेन समर्पिताः ॥ ४२ ॥

तस्या अपीति तस्यामपीति च पाठः । मद्वदिति ममेव मयीव वा ।

आर्थी तद्धितगम्या यथा—

अपि सा सुमुखी तिष्ठेद्दृष्टेः पथि कथञ्चन ।
अप्रार्थितोपसंपन्ना पतितानभ्रवृष्टिवत् ॥ ४३ ॥

एते षट् पूर्णाभेदाः । संक्षेपेणोक्ता तु लुप्ता । लोपश्च साधारणधर्मस्य वा उपमाप्रतिपादकस्य वा द्वयोरपि वा सोपमेययोस्तयोर्वा भवतीति चत्वारो भेदाः । तदुक्तम्—साम्यवाचकविच्युतेरिति, समासे तद्वाचीत्यादि, उपमानोपमेयेत्यादि क्वचिदित्यन्तं, साम्योपमेयेत्यादि च । तत्र साधारणधर्मलोपे वाक्यगम्या समासगम्या च । आद्या श्रौती आर्थी । यथा—प्रबोधादित्यादि । यदाऽत्र पूर्णेन्दुबिम्बस्यासितोदरत्वं लुप्तं विवक्ष्यते । अत्र चेन्दुबिम्बमिवाखण्डमासीदिति पाठे श्रौत्या, अखण्डेनेन्दुना तुल्यमिति

पाठे चार्थ्या वाक्यगम्यत्वम् । पूर्णेन्दुबिम्बप्रतिममिति पाठे समासगम्यत्वम्—इति (न) युक्तं व्याख्यानम् । असितोदरोत्पलविवक्षायां तु धर्मन्यूनत्वे दुष्टैवेयं स्यात् । तस्मान्नेत्रैरिवोत्पलैरित्याद्युदाहरणम् । यदाऽत्र श्यामत्वादि लुप्तं विवक्ष्यते । नेत्रैरिवोत्पलैरिति पाठे श्रौती नेत्रैः समैः कुवलयैरित्यार्थी च वाक्यगम्या । नेत्रैरिवोत्पलैरिति श्रौती नेत्राभैरुत्पलैरित्यार्थी च समासगम्या ।

द्योतकलोपे समासगम्यैव । यथा—

इति काले कलोल्लापिकादम्बकुलसंकुले ।
त्रिदशाधीशशार्दूलः पश्चात्तापेन धूर्जटिः ॥ ४४ ॥
तां शशिच्छायवदनां नीलोत्पलदलेक्षणाम् ।
सरोजकलिकागौरीं गौरीं प्रति मनो दधे ॥ ४५ ॥

अत्र सरोजकलिकागौरीमिति । गौरत्वं ह्यत्र साधारणो धर्मः । कादम्बाः पक्षिविशेषाः ।

द्वयलोपे समासगम्यैव । यथा—त्रिदशाधीशशार्दूलः नीलोत्पलदलेक्षणामिति च ।

क्वचिदुपमानमुत्तरपदं क्वचित् पूर्वपदमिति दर्शनायोदाहरण(द्वय)म्—इत्ययुक्तं व्याख्यानम् । यतः किं नीलोत्पलदले इवेक्षणे यस्याः, किं नीलोत्पलदले एव ईक्षणे यस्या इति निश्चयस्याभावे संदेहसंकरोऽयम् । त्रिदशाधीशशार्दूल इत्येतत्तूदाहरणम् । यद्यप्यत्रापि संभावनाद्वयं तथापि शार्दूलोपमितस्य त्रिदशाधीशस्योक्तरूपां गौरीं प्रति मनोनिधानमुचितं न तु शाब्दक्रमेण त्रिदशाधीशोपसर्जनस्य शार्दूलेत्यस्येत्युपमापरिग्रहेऽस्ति साधकमिति न सन्देहः ।

त्रितयलोपे समासगम्यैव । यथा-तां शशिच्छायवदनामित्यादि । शशिच्छायेव छाया यस्येति ‘सप्तम्युपमाने’त्यादिना समासलोपौ । अत्रोपमेयस्य लोपः किमुपमानस्येति सुधीभिरेव परीक्ष्यम् ।

एवं समासगम्या पञ्चविधा ।

सुब्धातुगम्या पञ्चविधा । तत्र तथोपमाना(दित्या)दिना क्यच्-प्रत्ययावसेयोक्ता । सा च कर्मोपमानिकाऽधिकरणोपमानिका च । कर्मोपमानिका द्विधा । द्विलोपे एकलोपे च भावात् । द्विलोपे यथा—

स दुःस्थीयन् कृतार्थोऽपि निःशेषैश्वर्यसंपदा ।
निकामकमनीयेऽपि नरकीयति कानने ॥ ४६ ॥

अत्र दुःस्थीयन्निति दुःस्थः कश्चिदुपमानं भगवदात्मोपमेयः । स द्योतकश्च लुप्तः । क्यच्प्रत्ययोक्तस्त्वाचारः समानो धर्मः । एकलोपे पुत्रीयति शिष्यती(मि)त्याद्युदाहार्यम् ।

अधिकरणोपमानिका यथा—नरकीयतीति । 'अधिकरणाच्चोपसङ्ख्यान'मिति क्यच् । अत्र काननमुपमेयमिति द्योतकस्यैव लोपः ।

क्यङ्प्रत्ययावसेया क्विप्प्रत्ययावसेया च कर्त्रुपमानिकैव । तदुक्तम्—क्वचित् सा कर्तुरित्यादि ।

क्यङ्प्रत्ययगम्या यथा—

कृशानवज्जगत्तस्य पश्यतस्तां प्रियां विना ।
खद्योतायितुमारब्धं तत्त्वज्ञानमहामहः ॥ ४७ ॥

अत्र खद्योतायितुमिति । अत्र च द्योतकस्यैव लोपः ।

क्विप्प्रत्ययगम्या तु यथा—कृशानवदिति । अत्र 'सर्वप्रातिपदिकेभ्यः इत्येके' (पा. ३-१-११ काशिकास्थं वार्तिकम् ।) इत्याचारक्विबन्तात् शतृप्रत्ययः । इह क्विपोऽश्रवणात् साधारणधर्मोऽप्यार्थः । तेनेयं द्वयलोपे ।

कृदवसेया तु द्विविधा । कर्मोपमानिका कर्त्रुपमानिका च । तदुक्तमुपमान इत्यादि तद्वाच्या सेत्यन्तम् । पूर्वा यथा—

तस्येतरमनोदाहमदहत् प्रज्वलन्मनः ।
इमां प्रति तपःशक्त्याकृष्टबुद्धेः स्मरानलः ॥ ४८ ॥

द्वितीया यथा—

स दग्धविग्रहेणापि वीर्यमात्रस्थितात्मना ।
स्पृष्टः कामेन सामान्यप्राणिचिन्तमचिन्तयत् ॥४९॥

अनयोश्च द्योतकस्यैव लोपः ।

तद्धितावसेया तु कल्पबादिभिर्भवति । तदुक्तम्–कल्पप्प्रभृतिभिरित्यादि । प्रभृतिग्रहणात् 'इवे प्रतिकृतौ' (पा.५-३-९६)इति कनादिभिः । यथा–

चण्डालकल्पे कन्दर्पे प्लुष्ट्वा मयि तिरोहिते ।
संजातातुलनैराश्या किं सा शोकान्मृता भवेत् ॥५०॥

वार्तिककारदृशा च प्रकृत्यर्थसदृशे कल्पप्प्रत्ययस्य विधानात् क्रौर्यादेः साधारणधर्मस्यैवात्र लोपः । एवमश्वकश्चैत्रक इत्यादौ ।

अयःशूलेनान्विच्छति आयःशूलिकः इत्यत्रायःशूलस्योपमानस्यैवोपमा(पादा)ना(द)र्थार्जनोपायस्य कस्यचिदुपमेयस्य तैक्ष्ण्यादेः साधारणधर्मस्य द्योतकस्य च लोपात्त्रयलोप उपमा—इति न युक्तमभिधानम् । अर्थार्जनोपायस्यायःशूलरूपतयाध्यवसानादतिशयोक्तित्वं ह्युचितम् । शशिच्छायवदनामितिवत् भविष्यति—इति च न युक्तः परिहारः । अत्रापि शशी च्छाया यस्येति विवक्षायामुपमाविश्रान्तावपि रूपकत्वमेव । रूपकादावप्यस्ति ह्युपमाविश्रान्तिः ।

तदेवमेकलोपे वाक्यगम्ये द्वे समासगम्यास्तिस्रः । सुब्धातुगम्यास्तिस्रः । कृद्गम्ये द्वे । तद्धितगम्यैका इत्येकादश । द्विलोपे समासगम्यैका । सुब्धातुगम्ये द्वे इति तिस्रः । त्रिलोपे त्वेक एव । इति पञ्चदश । अन्ये तु भेदा इह नोट्टङ्किता इति न दर्श्यन्ते ।

(८)

उपमानसंनिधाने च साम्यवाच्युच्यते बुधैर्यत्र ।
उपमेयस्य च कविभिः सा प्रतिवस्तूपमा गदिता ॥५१॥

यत्रोपमानोपमेययोर्द्वयोरपि समीपे साधारणधर्मोपादानं सा प्रतिवस्तूपमा । अतएव वस्तु वाक्यार्थः उपमानं वस्तुनो वाक्यार्थान्तरस्य ।

अत्र चानेकवाक्यत्वे इवादेरप्रयोगे किमुपमेयं किं वोपमानमिति प्रकरणाद्धि व्यवस्थेत्याह—

प्राकरणिकेतरत्वस्थित्यैकश्चोपमेयतां लभते ।
उपमानत्वं चापर इत्युपमावाचिशून्येयम् ॥५२॥

यत् प्राकरणिकं तदुपमेयम् । इतरत्तूपमानमिति शब्दशून्येयमित्यनन्त(त्यन्त)रं द्रष्टव्यः(म्) ।

उदाहरणम्–

विरलास्तादृशो लोके शीलसौन्दर्यसंपदः ।
निशाः कियत्यो वर्षेऽपि यास्विन्दुः पूर्णमण्डलः॥५३॥

कियत्यः स्वल्पाः । अत्र च साधारणधर्म उभयत्राप्युपात्तः । उपमा च स्फुटा॥

इत्यौद्भटालङ्कारविवृतौ प्रथमो वर्गः ॥

## द्वितीयो वर्गः ।

आक्षेपोऽर्थान्तरन्यासो व्यतिरेको विभावना ।
समासातिशयोक्ती चेत्यलंकारान् परे विदुः ॥ १ ॥

उक्तिशब्दो द्वाभ्यां संबध्यते । तेन समासोक्तिरतिशयोक्तिश्च ।

( ९ )

प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया ।
आक्षेप इति तं सन्तः शंसन्ति कवयः सदा ॥ २ ॥

अभिमतस्याशक्यवचनत्वादिविशेषप्रतिपादनाय यः प्रतिषेधः प्रतिषेध इव । मुखं पद्मं पद्ममिवेतिवत् । न तु प्रतिषेध एव । तमाक्षेपं वदन्ति । न च वाच्यं प्रतिषेधे सतीष्टमिष्टमिव भवत्विति । यस्मात्प्राकरणिकत्वात् लब्धस्थेमा इष्टोऽर्थः । तस्य च निषेधः क्रियमाणोऽङ्गतां प्रतिपद्यते । (ते)नासौ प्रतिषेध इव । न त्विष्ट इष्ट इवेत्ययुक्ते चोद्यप्रतिसमाधाने । यतोऽस्त्वेवं तथापि नाक्षेपलक्षणप्रसक्तिः । इष्टस्येव प्रतिषेध इत्यनभिधानात् ।

स चेष्टोऽर्थः कदाचिद्वक्ष्यमाणः कदाचिदुक्त इत्याक्षेपो द्विविधः । तदाह—

वक्ष्यमाणोक्तविषयः स तु द्विविध इष्यते ।

व्याख्यातम् ।

ननु चेष्टमिच्छाकर्म । तत् कदाचिन्नैवोच्येत । तद्वक्ष्यमाणोक्तविषयतया (कथं) द्वैविध्यमित्याह—

निषेधेनैव तद्बन्धो विधेयस्य च कीर्तितः ॥ ३ ॥

विवक्षितत्वरूपं विधेयत्वमत्रेष्टत्वम् । तेन विधेयस्यावश्यमुक्तिक्रियासंभवादार्थत्वे शाब्दत्वे च सति द्वैविध्यम् । पूर्वो यथा—

अहो स्मरस्य माहात्म्यं यद्रुद्रेऽपि दशेदृशी ।
इयदास्तां समुद्राम्भः कुम्भैर्माने तु के वयम् ॥ ४ ॥

अत्र स्मरमाहात्म्यं प्रतिपादयितुमिष्टं तस्य चेयदास्तामिति निषेधः । स चाङ्गत्वादशक्यतद्वर्णनत्वं विशेषं प्रतिपादयतीति निषेध इव । माहात्म्यस्य

च यद्रुद्र इत्यादिना सामान्येनैवोक्तेर्विशेषेणानभिधानात् वक्ष्यमाणविषयत्वम्।

उक्तविषयस्तु यथा--

इति चिन्तयतस्तस्य चित्रं चिन्तावधिर्न यत्।
क्व वा कामविकल्पानामन्तः कालस्य चेक्षितः ॥ ५॥

अत्र चित्रत्वस्योक्तिः क्व वेति निब(षि)ध्यते। प्रसिद्धत्वं चात्र हेतुः। पूर्वत्र विरुद्धत्वम्। न हि तद्वर्णनसंभवः। आभ्यामेव निमित्ताभ्यामाक्षेपो भवति। अत्र चित्रत्वस्योक्तविषयस्याक्षेप इत्युक्तविषयता।

अत्र केचिदाचक्षते—एतदुदाहरणद्वयमपि न युक्तम्। तथाप्यु(त्राद्यो) दाहरणमुक्तविषयमेव। अहो स्मरस्य माहात्म्यमिति सामान्येन यद्रुद्रेऽपि दशेदृशीति च विशेषेण स्मरमाहात्म्यस्योक्तत्वात्। यच्च सामान्यविशेषाभ्यामुक्तं तत् यद्यनुक्तमुच्यते सर्वमिदानीमनुक्तं स्यात्। एवमपि वा चित्रत्वमप्यनुक्तमिति कथमुक्तविषयता। प्रत्युतात्र सामान्येनैवोक्तिः। अथोच्यते नात्र स्मरमाहात्म्यमाक्षिप्यते। अपि तु रुद्रदशेदृशीति। तदयुक्तम्। तस्या इष्टत्वेनाप्रतीतेः। यद्रुद्रेऽपि दशेदृशीति स्मरमाहात्म्योपोद्बलनार्थम्। न तु विपर्ययः। प्राकरणिकत्वादार्थमस्याः प्राधान्यमिति चेदेवमपीदृशीत्येतत् पदं प्रत्यक्षनिर्देश्यविषयत्वान्निराकाङ्क्षम्। अतो नात्र किंचिद्वक्ष्यमाणम्। न हि तादृशीति पदवदस्य साकाङ्क्षत्वमिति पुनरप्युक्तविषयता। कथं चात्राक्षेपव्यपदेशः। न हि तन्निमित्ताऽत्र चारुत्वप्रतीतिः। अपि त्वतिशयोक्तिः स्वहिताक्षेपहेतुका (?)। तेन संकरोऽयम्।

द्वितीयस्मिन्नपि श्लोके क्व वेत्यनेन न चित्रत्वमाक्षिप्यते। अपि त्वन्तेक्षितत्वम्। तच्चाक्षेपपर्यवसानमिति चेदनन्वयेऽप्याक्षेपप्रसक्तिः। अपह्नुतिरूपकदीपकादावप्युपमाप्रसङ्गश्च। अथ तत्र भङ्ग्यन्तरेणाक्षेपादीनां स्थितिरिति नाक्षेपादित्वम्। इहापि विच्छित्त्यन्तरेणाक्षेपस्थितिरिति कथं नान्यत्वम्। अथ गम्यमानोत्प्रेक्षावत् गम्यमानत्वेऽप्याक्षेपस्यालंकारान्तरानभिधानादाक्षेपत्वमेवेष्यते। तर्ह्युत्प्रेक्षालक्षणवदिह विशेषो वक्तव्यः। तदेवमन्यत्रापि संभवी विचारः प्रकृतक्षतिमादधाति (इति) नास्माभिर्दर्शित इत्यनया दिशा स्वयं विचार्यम्।

एते तूदाहरणे वक्ष्यमाण(णोक्त)विषये—

सुहअ विलम्बसु थोअं जाव इमं विरहकाअरं हिअअं ।
संठविऊण भणिस्सं अहवा वोलेसु किं भणिमो ॥
बालअ णाहं दूई तीए पिओ सि त्ति णह्मवावारो ।
सा मरइ तुज्झ अयसो एअं धम्मक्खरं भणिमो ॥

(१०)

**समर्थकस्य पूर्वं यद्वचोऽन्यस्य च पृष्ठतः ।**
**विपर्ययेण वा यत्स्याद्धिशब्दोक्त्याऽन्यथाऽपि वा ॥६॥**
**ज्ञेयः सोऽर्थान्तरन्यासः**

अनुपपद्यमानतया संभाव्यमानस्यार्थस्य समर्थनार्थमर्थान्तरस्यैव यन्न्यसनं सोऽर्थान्तरन्यासः । स च समर्थकस्य प्रागुपादाने समर्थ्यस्य वेति द्विभेदः । प्रतिभेदञ्च हिशब्देन योगो वियोगो वेति चतुर्विधः ।

नन्वप्रस्तुतप्रशंसादृष्टान्ताभ्यां नायं भिद्यते । तथा हि—

प्रीणितप्रणयि स्वादु काले परिणतं बहु ।
विना पुरुषकारेण फलं पश्यत शाखिनाम् ॥ ( भामह–३–२९ )

इत्यप्रस्तुतप्रशंसया विशेषेण शाखिवृत्तान्तेन वाच्येन सर्वं जगच्चेष्टितं दैवप्रधानमिति सामान्यं गम्यमानं समर्थ्यते । तथा,

त्वयि दृष्ट एव तस्या निर्वाति मनो मनोभवज्वलितम् ।
आलोके हि हिमांशोर्विकसति कुमुदं कुमुद्वत्याः ॥ ( रुद्रट–८–९५ )

इति दृष्टान्तेन दार्ष्टान्तिकं समर्थ्यते । तेनास्य लक्षणस्यातिव्याप्तिरित्याह–

**प्रकृतार्थसमर्थनात् ।**
**अप्रस्तुतप्रशंसाया दृष्टान्ताच्च पृथक् स्थितः ॥ ७ ॥**

---

१. सुभग विलम्बस्व स्तोकं यावदिमं विरहकातरं हृदयम् ।
संस्थाप्य भणिष्याम्यथवाऽपक्राम किं भणामः ॥

२. बालक नाहं दूती तस्याः प्रियोऽसीति नास्मद्व्यापारः ।
सा म्रियते तवायशः एतद्धर्माक्षरं भणामः ॥

इदमत्र तात्पर्यम्—विशेषे सामान्येन सामान्ये वा विशेषेण समर्थ्ये सामान्यस्य तथाभूतं निमित्तमुच्यते (यत्) विशेषे सामर्थ्यात् प्रतिपन्नं समर्थ्यस्यानुपपद्यमानतां निरस्यति । विषयापेक्षया स्वसामान्यमर्थान्तरमिव । अप्रस्तुतप्रशंसायामेकस्यानुपादानमेव । दृष्टान्ते बिम्बप्रतिबिम्बन्यायेनैव न्यसनहेतुकथनम् । तेन नैतल्लक्षणम् ।

क्रमेणोदाहरणम्—

तन्नास्ति यन्न कुरुते लोके ह्यत्यन्तकार्यिकः ।
एष शर्वोऽपि भगवान् वटूभूय स्म वर्तते ॥ ८ ॥

कार्यिकः कार्यार्थी । वटूभूय । ब्रह्मचारितामवलम्ब्य ।

अत्र भगवतो वटुभाववर्तने समर्थ्ये सामान्यस्य यत्किंचनकारित्वस्य कार्यिकत्वं निमित्तमुक्तम् । यद्भगवति चित्तो(न्तो)पलक्षणरूपं प्रकृते सामर्थ्यात् प्रतिपन्नं सत् समर्थकत्वं भजते । एवमुत्तरत्र योज्यम् ।

प्रच्छन्ना शस्यते वृत्तिः स्त्रीणां भावपरीक्षणे ।
प्रतस्थे धूर्जटिरतस्तनुं स्वीकृत्य वाटवीम् ॥ ९ ॥

भावः आशयः । वटोरियं वाटवी ।

हरोऽथ ध्यानमातस्थौ संस्थाप्यात्मानमात्मना ।
विसंवदेद्धि प्रत्यक्षं निर्ध्यातं ध्यानतो न तु ॥ १० ॥

प्रत्यक्षमैन्द्रियकम् ।

अपश्यच्चातिकष्टानि तप्यमानां तपांस्युमाम् ।
असंभाव्यपतीच्छानां कन्यानां काऽपरा गतिः ॥ ११ ॥

तपांसि भगवतीं खेदयन्ति । तानि साऽर्जयन्ती तप्यमानोच्यते । 'तपस्तपःकर्मकस्यैव' ( पा० ३-१-८८ ) इति चात्र कर्मवद्भावः । उपायान्तरपरिहारेण किमिति तपश्चक्रे इत्यत्र समर्थितम् ।

[1]होइ ण गुणाणुराओ जडाणं णवरं पसिद्धिसरणाणम् ।
किअ पह्नुवइ ससिमणी चन्दे ण पिआमुहे दिट्ठे ॥

---

१ भवति न गुणानुरागो जडानां केवलं प्रसिद्धिशरणानाम् ।
किल प्रस्नुवति शशिमणिश्चन्द्रे न प्रियामुखे दृष्टे ॥

इत्यादौ सामान्यं विशेषेण समर्थ्यते । शशिमणेश्च शीतलत्वं जाड्यम् । अत्रापि पृथ(ग्रा)ग्वच्चत्वारो भेदाः । एवं न परं साधर्म्येण समर्थनं यावद्वै-धर्म्येणापि । तत्र विशेषस्य सामान्येन समर्थनं यथा—

उदिते भास्करे क्वापि गम्यते तिमिरोत्करैः ।

तेजस्विनमनालोक्य प्रभवन्ति मलीमसाः ॥

अत्राप्यन्यद्भेदत्रयम् । सामान्यस्य विशेषेण समर्थनं यथा—

गुणानामेव दौर्गत्यात् धुरि धुर्यो नियुज्यते ।

असंजातकिणस्कन्धः सुखं स्वपिति गौर्गडिः ॥

अत्रापि भेदत्रयमन्यत् ।

(११)

विशेषापादनं यत् स्यादुपमानोपमेययोः ।

निमित्तादृष्टिदृष्टिभ्यां व्यतिरेको द्विधा तु सः ॥१२॥

स च उपमेयोत्कर्षोपमाननिकर्षरूपव्यतिरेकनिमित्तस्योपादाने उत्कर्षनिकर्षोभयनिमित्तानां पर्यायेणानुपादाने च भवतीति चतुर्भेदः । तत्रोत्कर्षनिमित्तानुपादान उदाहरणम्—

सा (स) गौरीशिखरं गत्वा ददर्शोमां तपःकृशाम् ।

राहुपीतप्रभस्येन्दोर्जयन्तीं दूरतस्तनुम् ॥ १३ ॥

गौरीशिखरं हिमवदेकदेशः । अत्रेन्दुतनुरुपमानम् । उमोपमेयम् । जयन्ती-मिति व्यतिरेकाभिधानम् । राहुपीतप्रभत्वं निकर्षनिमित्तं शाब्दम् । उत्कर्षनि-मित्तमक्षतलावण्यत्वं स्वार्थम् ।

निकर्षनिमित्त आर्थे उदाहरणम्—सदा कान्तिमतीमिन्दोरिति पाठे । उभयानुपादाने यथा-पीयूषदीधितेस्तस्येति पाठे ।

उभयोपादाने उदाहरणम्—

पद्मं च निशि निःश्रीकं दिवा चन्द्रं च निष्प्रभम् ।

स्फुरच्छायेन सततं मुखेनाधः प्रकुर्वतीम् ॥ १४ ॥

एष व्यतिरेकोऽर्थादौपम्य उक्तः ।

शब्दस्पृष्टे च तस्मिन् (स) भवतीत्याह—

**यो वैधर्म्येण दृष्टान्तो यथेवादिपदान्वितः ।**
**व्यतिरेकोऽत्र सोऽपीष्टो विशेषापादनान्वयात् ॥१५॥**

वैधर्म्यं यत्रोपमानधर्मस्योपमेये विगमः । तत्रोभयानुपादाने यथा—

**शीर्णपर्णाम्बुवाताशकष्टेऽपि तपसि स्थिताम् ।**
**समुद्वहन्तीं नापूर्वं गर्वमन्यतपस्विवत् ॥ १६ ॥**

अशनमाशः । उपशान्तचित्तत्वमुत्कर्षहेतुः । तदभावो निकर्षहेतुः । तद्द्वयमप्यार्थम् । निकर्षहेत्वनुपादाने उदाहरणम्—शान्तः(न्तां) पर्णाम्बुवातेत्यादौ पाठे । उत्कर्षहेत्वनुपादाने यथा—शीर्णपर्णाम्बुवातेत्यादौ नो गर्वमन्यतुच्छतपस्विवत् इति च पाठे । उभयोपादाने उदाहरणम्—शान्तामित्यादावन्यतुच्छेत्यादौ पाठे । अत्र च वतिप्रत्ययोपादानसामर्थ्यादौपम्यं शब्दस्पृष्टम् । 'तेन तुल्यम्' ( पा. ५–१–११५ ) इत्यादिना वतेर्विहितत्वात् । श्रौतत्वं यथेवादिना 'तत्र तस्येव' ( पा. ५–१–११६ ) इत्यनेन वतिना च भवति । यथा—अन्यस्येवास्य न स्मयः । एष उभयानुपादाने । निकर्षहेत्वनुपादाने यथा—सुमतेरन्यवन्नास्य स्मय इति । उत्कर्षहेत्वनुपादाने यथा—अन्यतुच्छजनस्येवास्य न स्मय ( न स्मयोऽस्य ) इति । उभयोपादाने यथा—अन्यतुच्छजनस्येव न स्मयोऽस्य महामतेः ( इति ) ।

एषां द्वादशभेदानां न केवलं गम्यमानो(न उ)पादीयमानो वा साधारणधर्मो(र्म उ)पमामूलं यावच्छ्लेषेण स्थित इत्याह—

**श्लिष्टोक्तियोग्यशब्दस्य पृथक् पृथगुदाहृतौ ।**
**विशेषापादनं यत् स्यात् व्यतिरेकः स च स्मृतः ॥१७॥**

'एकप्रयत्नोच्चार्याणाम्' ( का. सा. सं. ४–२३ ) इत्यादिवक्ष्यमाणतः श्लिष्टं तदुचितस्य ह्यर्थशब्दस्य यदोपमान उपमेये च पृथगुच्चारणं विशेषनिमित्ते सति तदा सोऽपि व्यतिरेकः । वक्ष्यमाणोदाहरणसंग्रहप्रसङ्गात् पृथगित्यादि न (च) वाच्यम् । उदाहरणम्—

**या शैशिरी श्रीस्तपसा मासेनैकेन विश्रुता ।**
**तपसा तां सुदीर्घेण दूराद्विदधतीमधः ॥ १८ ॥**

तपा माघमासः । तपश्च व्रतम् । एष चोभयोपादाने । निकर्षहेत्वनभिधाने मासेन भुवि विश्रुतेति पाठः । उत्कर्षहेत्वनभिधाने–तपसा सहसैवैनामिति पाठः। उभया(न)भिधाने यथोक्तं पाठद्वयम् । एप चार्थ औपम्ये । ( शाब्दे तु ) नाल्पः कविरिव स्वल्पश्लोको देव भवान् महान् (इति) । अत्राप्यन्यत् भेदत्रयम्।

सत्यं हरिणशावाक्ष्याः प्रसन्नसुभगं मुखम् ।
समानं शशिनः किंतु स कलङ्कविडम्बितः ॥ ( काव्या–४–३–२२)

इति वामनेन यद्व्यतिरेकोदाहरणमुक्तं तत्र(दुपमाप्र)भृतीनां संकरता न व्यतिरेकत्वम् । अथ सत्यपदेनोपमा न प्ररोहतीत्युच्यते, तदास्तु व्यतिरेकत्वम् ।

( १२ )

क्रियायाः प्रतिषेधे या तत्फलस्य विभावना।
ज्ञेया विभावनैवासौ समाधौ सुलभे सति ॥ १९ ॥

कारणभूतक्रियाप्रतिषेधे तत्कार्यस्य यत्प्रकटनं सा विभावना । न दैवसंगतेत्याह–समाधाविति । परिहारे सतीत्यर्थः ।

उदाहरणम्–

अङ्गलेखामकाश्मीरसमालम्भनपिञ्जराम् ।
अनलक्तकताम्राभामोष्ठमुद्रां च बिभ्रतीम् ॥ २० ॥

काश्मीरं कुङ्कुमम् । अङ्गलेखापिञ्जरत्वस्य कुङ्कुमसमालम्भनं ताम्रोष्ठत्वस्यालक्तकयोजनक्रियात्मकं कारणम् । अलक्तकशब्दो ह्यत्र तद्योजनायां वर्तते । अन्यथा विभावनोदाहरणत्वस्यानुपपत्तेः। तच्चात्र कारणं निषिद्धम्। परिहारश्च स्वाभाविकसुलक्षणत्वम् ।

( १३ )

प्रकृतार्थेन वाक्येन तत्समानविशेषणैः ।
अप्रस्तुतार्थकथनं समासोक्तिरुदाहृता ॥ २१ ॥

प्रस्तुतार्थेन वाक्येनाप्रस्तुतोऽप्यर्थो यदभिधीयते सा समासोक्तिः । नन्वेवं श्लेषता प्राप्तेत्याह–तत्समानविशेषणैः । विशेष्यपदं तु प्रस्तुतार्थाभिधाय्येव । उदाहरणम्–

दन्तप्रभासुमनसं पाणिपल्लवशोभिनीम् ।
तन्वीं वनगतां लीनजटाषट्चरणावलिम् ॥ २२ ॥

दन्तप्रभावत् शोभनं हृदयं यस्याः । पाणेः पल्लवावग्रौ ताभ्यां शोभते । वनं जलम् । लीना जटासु षट्चरणावलिश्च यस्याः सा भ(ग)वतीति प्रस्तुतोऽर्थः । दन्तप्रभावत् धवलानि पुष्पाणि यस्या इति तु व्याख्याने एकदेशविवर्तिरूपकता ।

( १४ )

निमित्ततो यत्तु वचो लोकातिक्रान्तगोचरम् ।
मन्यन्तेऽतिशयोक्तिं तामलंकारतया बुधाः ॥ २३ ॥
भेदे नान्यत्वमन्यत्र नानात्वं यत्र बध्यते ।
तथा संभाव्यमानार्थनिबन्धेऽतिशयोक्तिगीः ॥ २४ ॥
कार्यकारणयोर्यत्र पौर्वापर्यविपर्ययात् ।
आशुभावं समालम्ब्य बध्यते सोऽपि पूर्ववत् ॥ २५ ॥

किंचिद्धेतुमवलम्ब्य यदलौकिकं वचो निबध्यते साऽतिशयोक्तिः । तस्याश्चत्वारो भेदाः—तथाहि भेदे अभेदः, अभेदे भेदः, बहिरसतः संभावनायां निबद्धः, कार्यस्य शीघ्रकालताप्रतिपादनाय पूर्वभावित्वं कारणादिति । आद्यस्योदाहरणम्—

तपस्तेजःस्फुरितया निजलावण्यसंपदा ।
कृशामप्यकृशामेव दृश्यमानामसंशयम् ॥ २६ ॥

भगवत्याः कार्श्यमकार्श्यं चाभिन्नीकृतम् । हेतुश्चात्र तपस्तेजोजनिता सौन्दर्यसमृद्धिः ।

द्वितीयस्योदाहरणम्—

अचिन्तयच्च भगवानहो नु रमणीयता ।
तपसाऽस्याः कृताऽन्यत्वं कौमाराद्येन लक्ष्यते ॥ २७ ॥

एकैवात्र कुमारी भगवती तरुणी चेत्यन्यत्वं गमिता । हेतुश्च तपोजनितं रामणीयकम् ।

तृतीयस्योदाहरणम्—

पतेद्यदि शशिद्योतच्छटा पद्मे विकासिनि ।
मुक्ताफलाक्षमालायाः करेऽस्याः स्यात्तदोपमा ॥२८॥

प्रफुल्ले पद्मे चन्द्रकरप्रकराभावादसंभवन्नयमर्थः संभावनायां निबद्धः । हेतुश्च गौरीकरेऽक्षमालावलोकनम् ।

चतुर्थस्योदाहरणम्—

मन्ये च निपतन्त्यस्याः कटाक्षा दिक्षु पृष्ठतः ।
प्रायेणाग्रे तु गच्छन्ति स्मरबाणपरम्पराः ॥ २९ ॥

कटाक्षपातस्य पश्चाद्भावः स्मरबाणपरंपरागमनस्य पूर्वभावित्वमुक्तं समानजाति(काल)त्वप्रतिपादनाय । एवं च 'दाहोऽम्भःप्रसृतिंपच' इत्यादावम्भःप्रसृतिंपचत्वादावतिशयोक्तिः सामान्यलक्षणेनैव । न तु विशेषलक्षणेन संगृहीतेति केचित् । प्रसिद्धज्वलितानलदाहाभेदेनैवायमध्यवसित इति विशेषलक्षणमप्यत्रास्तीति न दोषः । एवमन्यत्र बोध्यम् ।

इत्यौद्भटालङ्कारविवृतौ द्वितीयो वर्गः ।

---

# तृतीयो वर्गः ।

---

यथासंख्यमथोत्प्रेक्षां स्वभावोक्तिं तथैव च ।
अपरे त्रीनलङ्कारान् गिरामाहुरलङ्कृतौ ॥ १ ॥

स्फुटम् ।

( १५ )

भूयसामुपदिष्टानामर्थानामसधर्मणाम् ।
क्रमशो योऽनुनिर्देशो यथासंख्यं तदुच्यते ॥ २ ॥

असधर्मणामित्युपमाया अभावेऽपि भवतीत्याह ।

उदाहरणम्—

मृणालहंसपद्मानि बाहुचङ्क्रमणाननैः ।
तर्जयन्त्याऽनया व्यक्तं नलिन्यः सकला जिताः ॥ ३ ॥

अत्र तूपमाव्यतिरेकेऽपि यथासंख्यकृतं चारुत्वमस्त्येव । इदं तु स्पष्टमुदाहरणम्—

कज्जलहिमकनकरुचः सुपर्णवृषहंसवाहनाः शं वः ।
जलनिधिगिरिकमलस्था हरिहरचतुराननाः ददतु ॥ (इति. रुद्रट-का-७-३६)

( १६ )

साम्यरूपाविवक्षायां वाच्येवाद्यात्मभिः पदैः ।
अतद्गुणक्रियायोगादुत्प्रेक्षाऽतिशयान्विता ॥ ४ ॥
लोकातिक्रान्तविषया भावाभावाभिमानतः ।
संभावनेयम्

उपमानोपमेयभावस्याविवक्षणे न त्वभावे इव मन्ये ध्रुवमित्यादिभिः पदैः प्रतिपाद्योत्प्रेक्षा । किंरूपेत्याह—संभावनेयमिति । कुतः संभावनेत्याह—(अ)तद्गुणेति । (अ)तस्य (अ)प्रकृतस्य संभाव्यस्य संबन्धी यो गुणः क्रिया वा तद्योगादर्थात्प्रकृतस्य । किंफलेत्याह—अतिशयेति । उत्कर्षपर्यवसायिनीत्यर्थः ।

एषा च बहिरसंभवदर्थनिष्ठा कार्येत्याह—लोकेति । भावस्याभावस्य च संभावनया सा प्रथमं द्विधा । उदाहरणम्—

अस्याः सदाङ्कविम्बस्थदृष्टिर्मीनावलोकनैः ।
श्यामिकाङ्केन पतितं मुखं इन्दुभ्रमादिव ॥ ६ ॥

अत्राङ्कस्य मुखविषयपातक्रियायोगादिन्दुभ्रमो भावरूपो हेतुत्वेनोत्प्रेक्षितः ।

द्वितीयस्योदाहरणम्—

कपोलफलकावस्याः कष्टं भूत्वा तथाविधौ ।
अपश्यन्ताविवान्योन्यमीदृक्षां क्षामतां गतौ ॥ ७ ॥

अत्र क्षामतागमनक्रियायोगाददर्शनं हेतुत्वेनाभावरूपं संभावितम् । 'लक्षणहेत्वोः क्रियायाः' ( पा. ३-२-१२६ ) इति ह्यत्र शतृप्रत्ययः । " बालेन्दुवक्राणी " त्यादीन्यतद्गुणक्रियायोगादुत्प्रेक्षोदाहरणान्युन्नेयानि । अतद्गुणक्रियायाः संभावनम्—इति तु व्याख्यानमयुक्तम् । अशब्दार्थत्वात् । ' कपालेनोन्मुक्तः स्फटिकधवलेनाङ्कुर इव ' इत्यादेर्लक्ष्यस्यासंग्रहप्रसङ्गाच्च ।

ननु ' चन्दनासक्तभुजग ' इत्यादौ नेवादिपदप्रयोगः । तत् कथमुत्प्रेक्षेत्याह—

उत्प्रेक्षा वाच्यैवादिभिरुच्यते ॥ ५ ॥

गम्यमाना तु नोच्यत इत्यर्थः ।

( १७ )

क्रियायां संप्रवृत्तस्य हेवाकानां निबन्धनम् ।
कस्यचिन्मृगडिम्भादेः स्वभावोक्तिरुदाहृता ॥ ८ ॥

व्यापारप्रवृत्तस्य बालमृगादेः समुचितहेवाकनिबन्धनं स्वभावोक्तिः । न तु स्वभावमात्रकथनम् ।

उदाहरणम्—

क्षणं नंष्ट्वाऽर्धवलितः शृङ्गेणाग्रे क्षणं नुदन् ।
लोलीकरोति प्रणयादिमामेष मृगार्भकः ॥ ९ ॥

नंष्ट्वा रुदित्वा । नुदन् पीडयन् ॥

इत्यौद्भटालङ्कारविवृतौ तृतीयो वर्गः ।

———

## चतुर्थो वर्गः ।

प्रेयोरसवदूर्जस्वि पर्यायोक्तं समाहितम् ।
द्विधोदात्तं तथा श्लिष्टमलंकारान् परे विदुः ॥ १ ॥

उदात्तस्य द्वैविध्यकथनमुदाहरणार्थम् । श्लिष्टस्य तु विप्रतिपत्तिनिरासाय । तस्य हि भामहेन त्रैविध्यमुक्तम् ।

( १८ )

रत्यादिकानां भावानामनुभावादिसूचने ।
यत्काव्यं बध्यते सद्भिस्तत्प्रेयस्वदुदाहृतम् ॥ २ ॥

रतिरिह देवगुरुनृपादिविषया गृह्यते । कान्ताविषयायास्तु रतेः सूचने रसवदलङ्कारो वक्ष्यते । आदिग्रहणात्—

निर्वेदग्लानिशङ्काख्यास्तथाऽसूयामदश्रमाः ।
आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥
व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्राऽपस्मार एव च ॥
सुप्तिर्विबोधोऽमर्षश्चाप्यवहित्थमथोग्रता ।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥

इति व्यभिचारिभावाः । तथा

स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभेदोऽथ वेपथुः ।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥

इति सात्त्विकभावा गृह्यन्ते । तेषां चैकचत्वारिंशतो रत्यादिभावानामनुभावैः सात्त्विकवाचिकाहार्याङ्गिकरूपैरभिनयैः । आदिग्रहणादुद्दीपनालम्बनरूपैः विभावैः । स्थायिभावत्वात् रतेस्तु व्यभिचारिभिरपि सूचने व्यक्तौ यत् काव्यबन्धनं (तत्) प्रेयस्वत् । रत्या प्रियतरया उपलक्षितं भाववृन्दमत्रास्तीति । वह्नेः शीत(नि)वृत्तिरनुमीयत इति कारणस्यापि क्वचित् गमकत्वात् विभावैर्भवत्येव सूचनम् । रूपाद्रसानुमानं भवतीति व्यभिचारिणां सहकारिरूपाणामप्यस्ति गमकत्वम् । काव्यस्य तु सिद्धे गमकत्वे

निर्विवादैवानुभावानां सूचकता। न चानुमितमात्रतया स्थितो भावः काव्यजीवितम्। अपि तु साधारण्येन प्रतिपन्नो रसनाव्यापारगोचरः। एवं रसेऽप्यवगन्तव्यम्। अतएव व्यङ्ग्या रसभावतदाभासतत्प्रशमाः काव्यतत्त्वविद्भिरभिधीयन्ते। एतच्चाभ्युपगम्योक्तम्। वस्तुवृत्तपरीक्षायां रसभावादयोऽनुमेया एव न भवन्ति। नहि विभावानुभावव्यभिचारिणः कारणकार्यसहकारिरूपाः। तद्रूपत्वे कारणकार्यसहकारिसंयोगात् रसनिष्पत्तिरिति ब्रूयात्। यथा चैतत् तथा परीक्ष्यमाणं ग्रन्थगौरवमानयतीति न प्रतन्यते। पश्चाच्छब्दावसूचनम्—इति व्याख्यानं (न) युक्तम्। हासादीनां भावानां हास्यादीनां च रसानां भेदस्यासिद्धत्वात्।

उदाहरणम्—

इयं च सुतवाल्लभ्यान्निर्विशेषस्पृहावती।
उल्लापयितुमारब्धा कृत्वेमं क्रोड आत्मनः॥ ३॥

क्रोडे वक्षसि कृत्वेति संबन्धः। अत्र वक्षसि निधानमाङ्गिकोऽभिनयः। उल्लापनं वाचिकः। इदंशब्दवाच्यो मृगार्भक आलम्बनमिति (वि)भावः। वाल्लभ्योन्मीलितमौत्सुक्यं व्यभिचारिभावः। एभिश्चतुर्भिर्भावो रत्यात्मकः सूच्यते।

व्यभिचारिणस्तु सूचने उदाहरणम्—'एवंवादिनि देवर्षौ' इति। अत्रैवं देवर्षिवदनपितृपार्श्ववर्तनरूपाभ्यां विभावाभ्यामधोमुखतापद्मगणनाभ्यामनुभावाभ्यां लज्जा व्यज्यते। एवमन्येष्वप्युदाहार्यम्।

(१९)

रसवद्दर्शितस्पष्टशृङ्गारादिरसोदयम्।
स्वशब्दस्थायिसंचारिविभावाभिनयास्पदम्॥ ४॥
शृङ्गारहास्यकरुणरौद्रवीरभयानकाः।
बीभत्साद्भुतशान्ताश्च नव नाट्ये रसाः स्मृताः॥ ५॥

एते च धर्मादिप्रापकतया तदितरपरिहारतया च

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।
जुगुप्साविस्मयशमाः स्थायिभावाः प्रकीर्तिताः॥

इति प्रसिद्धरत्यादिव्यक्तिरूपास्तान्त्रिकरसशब्दवाच्याः । निर्वेदादीनां तु रमणी(सनी)यत्वेऽपि न तान्त्रिकरसशब्दवाच्यतेति भावत्वमेव । एषां च स्वशब्दादिभिः पञ्चभिरवगतिर्भवति । य(त)त्र स्वशब्दस्तद्वाचकः सामान्येन न तु तदभिव्यक्तौ शक्तः । एवं हि शृङ्गारहास्येत्यादिश्लोकान्नाव्यादिव सकलरसप्रतिपत्तिः स्यात् । यं कान्तादिमर्थमालम्ब्य रत्या(दि)श्चित्तवृत्तिविशेष उत्पद्यते स आलम्बनकारणम् । येन वसन्तेन्दूदयादिना वध्य(वर्ध्य)ते तदुद्दीपनकारणम् । यदुत्पद्यते स स्थायिभावः । तस्मिन् स्रक्सूत्रकल्पे यत्सहकारितयोदेति स व्यभिचारिभावः । सति च स्थायिनि येऽङ्गविकारास्तेऽनुभावाः अभिनयशब्दप्रतिपाद्याः । तेषामास्पदं यत् काव्यं वध्यते तत्काव्यबन्धनं रसवत् । रसोऽस्तीति । तत्र विभावादि(देः) काव्ये वाच्यतया व्यभिचारिणां तु क्वचित् प्रतीयमानतयापि स्थितिः । स्थायिनस्तु प्रतीयमानतयैव । प्रतीयमानो हि स्थायी रसः । स्थायिनस्तु वाच्यत्वेऽभिनयादिरूपं लिङ्गमकिंचित्करमेवेति हासादिसमत्वाच्च(त्वश्च) काव्यस्य प्राप्नोति । यतश्च विभावाद्यास्पदमतश्च दर्शितमतश्च (स्पष्ट)शृङ्गारादिरसम् ।

उदाहरणम्—

> इति भावयतस्तस्य समस्तान् पार्वतीगुणान् ।
> संभृतानल्पसंकल्पः कन्दर्पः प्रबलोऽभवत् ॥ ६ ॥
>
> स्विद्यतापि स गात्रेण बभार पुलकोत्करम् ।
> कदम्बकलिकाकोशकेसरप्रसरोपमम् ॥ ७ ॥
>
> क्षणमौत्सुक्यगर्भिण्या चिन्तानिश्चलया क्षणम् ।
> क्षणं प्रमोदालसया दृशाऽस्यास्यमभूष्यत ॥ ८ ॥

कलिकाकोशो मुकुलाभ्यन्तरम् । अत्राभिलाषिकः शृङ्गारो निबद्धः । तस्य स्वशब्दः कन्दर्पः प्रबल इति । एतेनैव च रत्यात्मकः स्थाय्युन्मीलितः । संचारिणस्त्वौत्सुक्यचिन्ताहर्षाः स्वशब्दोपात्ताः । स्वेदरोमाञ्चकौ सात्त्विकौ । सात्त्विकानां स्थायिभावावस्थाविशेषकत्वेन निर्वेदादिवत् संचारित्वात् संचारिणौ च स्वशब्दोपात्तावेव । इति भावयत इति भगवती भाव्य-

माना विभावः । दृशेत्युपाङ्गाभिनयः । एवं शृङ्गारोऽत्र पञ्चभिरभिव्यज्यत एव । एवमन्येऽपि रसा उदाहार्याः ।

(२०)

अनौचित्यप्रवृत्तानां कामक्रोधादिकारणात् ।
भावानां च रसानां च बन्ध ऊर्जस्वि कथ्यते ॥ ९ ॥

कामक्रोधादिभिः कारणैः शास्त्रविरुद्धेन रूपेण रसा भावा यदुपनिबध्यन्ते तदूर्जस्वि । शास्त्राविरोधे तु प्रेयोरसवदलंकारौ । ऊर्जसो बलस्य विद्यमानत्वाचोर्जस्विता । उदाहरणम्—

तथा कामोऽस्य ववृधे यथा हिमगिरेः सुताम् ।
संग्रहीतुं प्रववृते हठेनापास्य सत्पथम् ॥ १० ॥

अत्र काम इति स्वशब्दः । अनेनैव रतिरप्युच्यते । हठेनेत्यावेगः । अपास्य सत्पथमिति मोहो व्यभिचारी । हिमगिरेः सुतामित्यालम्बनमिति (वि)भावः । संग्रहीतुं प्रववृत इत्याङ्गिकोऽनुभावः । एवमत्र पञ्चभिः शृङ्गारोऽभिव्यज्यते । यदा च हठसंग्रहः शास्त्रविरुद्धो रागकारणकस्तदोर्जस्विता ।

(२१)

पर्यायोक्तं यदन्येन प्रकारेणाभिधीयते ।
वाच्यवाचकवृत्तिभ्यां शून्येनावगमात्मना ॥ ११ ॥

वाचकवृत्तिरभिधा । वाच्यवृत्तिराकाङ्क्षासंनिधियोग्यतावशात् संसर्गगमनम् । ताभ्यां विनाऽर्थसामर्थ्यात्मनाऽवगमस्वभावेन यत् प्रतिपाद्यते तत्पर्यायेणान्येन रूपेणाभिधानमिति पर्यायोक्तम् । अवगमव्यापारेण कथमभिधानमिति चेत् पर्यायोक्ततत्त्वमप्रस्तुतप्रशंसाव्याख्याने वक्ष्यामः ।

उदाहरणम्—

येन लम्बालकः सास्रः करघातारुणस्तनः ।
अकारि भग्नवलयो गजासुरवधूजनः ॥ १२ ॥
सोऽपि येन कृतः प्लुष्टदेहेनाप्येवमाकुलः ।
नमोऽस्त्वपारवीर्याय तस्मै कुसुमधन्वने ॥ १३ ॥

अत्र लम्बालकादिभिः कार्यभूतैः कारणभूतो गजासुरवधोऽनुक्तोऽपि गम्यत इति पर्यायोक्तता ।

(२२)

रसभावतदाभासवृत्तेः प्रशमबन्धनम् ।
अन्यानुभावनिःशून्यरूपं यत्तत्समाहितम् ॥ १४ ॥

अनौचित्यप्रवृत्ता रसभावा रसाभासभावाभासशब्दवाच्याः । तेन शास्त्रविरुद्धानामशास्त्रविरुद्धानां वा रसभावानां या प्रशान्तिर्निबध्यते तत्परिहाररूपत्वात् समाहितम् । न च रसान्तरप्रादुर्भावोऽत्रेत्युक्तमन्यस्य रसस्यानुभावैर्निःशेषेण शून्यम् ।

उदाहरणम्—

अथ कान्तां दृशं दृष्ट्वा(ष्ट्या) विभ्रमाच्च(मांश्च) भ्रमं भ्रुवोः ।
प्रसन्नं मुखरागं च रोमाञ्चं स्वेदसंकुलम् ॥ १५ ॥

स्मरज्वरप्रदीप्तानि सर्वाङ्गानि समादधत् ।
उपासर्पद्गिरिसुतां गिरिशः स्वस्तिपूर्वकम् ॥ १६ ॥

समादधत् निजे रूपेऽवस्थापयन् । अत्र कान्तदृष्ट्यादीनामनुभावानां प्रशमो निबद्धः ।

(२३)

उदात्तमृद्धिमद्वस्तु चरितं च महात्मनाम् ।
उपलक्षणतां प्राप्तं नेतिवृत्तत्वमागतम् ॥ १७ ॥

ऋद्धिः हेमादिधनसंपत् । तद्योगो वस्तुन उदात्तम् ।

उदाहरणम्—

उवाच च यतः क्रोडे वेणुकुञ्जरजन्मभिः ।
मुक्ताफलैरलंकारः शबरीणामपीच्छया ॥ १८ ॥

पुष्येन्द्रनीलवैडूर्यपद्मरागमयैर्वियत् ।
शिरोभिरुल्लिखव्यस्य शिखरं गन्धमादनम् ॥ १९ ॥

उत्तरोपत्यका यस्य प्रधानस्वर्णभूमयः ।
महान् मरकतोर्वीध्रः पादोपान्तं च संश्रितः ॥ २० ॥
बभूव यस्य पातालपातिन्यां संक्षये क्षितौ ।
पतनं न तया सार्धमायामस्तु प्रकव्यभूत् ॥ २१ ॥

तस्य हिमाद्रेर्भवती सुतेति वक्ष्यमाणेन संबन्धः । क्रोडः सूकरः । पुष्यो मणिभेदः । गन्धमादनः शिखरविशेषः । उपत्यकाः पर्वतस्याधरवर्तिनो भूभागाः । प्रधानं स्वर्णं जातरूपादि । उर्वीध्रः गिरिः । संक्षयः कल्पान्तः । भूमेरधोगमनात् भूमिमुक्तस्य हिमवतः कल्पान्त आयामः प्रकटीभूतः । अत्र च रत्नादिसंभारो निबद्धः । एतदेकमुदात्तम् ।

अपरमाह—चरितं च महात्मनाम् । उपलक्षणतां प्राप्तं नेतिवृत्तत्वमागतम् । अर्थप्राप्तावनर्थपरिहारे चोद्यतानां महतां चरितमुदात्तम् । न चात्र रसवदलंकारतेत्युक्तमुपलक्षणतामित्यादि । न ह्यत्र महात्मचरितमङ्गितया स्थितमपित्वङ्गतां गतम् ।

उदाहरणम्—

तस्यादिक्रोडपीनांसनिघर्षेऽपि पुनःपुनः ।
निष्कम्पस्य स्थितिमतो हिमाद्रेर्भवती सुता ॥ २२ ॥

आदिक्रोड आदिवराहः । अत्र हिमवत्स्थैर्ये मुख्ये भगवतोऽपि वीररसप्रतिपत्तिहेतुश्चरितमवान्तरवाक्यार्थीभूतम् । एवं रसान्तरेष्वप्युदाहार्यम् ।

(२४)

एकप्रयत्नोच्चार्याणां तच्छायां चैव बिभ्रताम् ।
स्वरितादिगुणैर्भिन्नैः बन्धः श्लिष्टमिहोच्यते ॥ २३ ॥
अलंकारान्तरगतां प्रतिभां जनयत्पदैः ।
द्विविधैरर्थशब्दोक्तिविशिष्टं तत्प्रतीयताम् ॥ २४ ॥

इहानेकस्यार्थस्य युगपद्विवक्षायां द्वयी गतिः । यतोऽर्थभेदाच्छब्दा भिद्यन्ते । आद्यश्च (?) भट्टोद्भटस्य सिद्धान्तः । तत्रार्थभेदेन भिद्यमानाः शब्दा उदात्तादिगुणैक्यात् प्रयत्नादिसाम्याच्च केचित्तन्त्रेण प्रयोक्तुं शक्यन्ते । तद्बद्धोऽर्थश्लेषः । तदुक्तमेकप्रयत्नोच्चार्याणां बन्धोऽर्थोक्तिविशिष्टं श्लिष्टं प्रतीयतामिति । अत्रोच्चार्याणामित्येतत्सामर्थ्यात् शब्दानामिति बोद्धव्यम् ।

केचित् पुनरुदात्तादिगुणभेदात् प्रयत्नभेदाच्च युगपत् प्रयोक्तुं न शक्यन्ते। परस्परच्छायानुकारिणस्तु भवन्ति। तद्बद्धे श्लेषः शब्दश्लेषः। तदुक्तम्— स्वरितादिगुणैर्भिन्नैः तच्छायां चैव बिभ्रताम्। बन्धः शब्दोक्तिविशिष्टं श्लिष्टम् इति।

तच्च श्लिष्टमुपमाद्यलंकारप्रतिभामुत्पादयति। नतु तत्रोपमादयः। अन्यत्र लब्धसत्ताकत्वात्। तदुक्तम्—अलंकारान्तरगतां प्रतिभां जनयत्पदैः। इति।

उदाहरणम्—

स्वयं च पल्लवाताम्रभास्वत्करविराजिनी।
प्रभातसन्ध्येवास्वापफललुब्धे हितप्रदा॥ २५॥
इन्दुकान्तमुखी स्निग्धमहानीलशिरोरुहा।
मुक्ताश्रीस्त्रिजगद्रत्नं पद्मरागाङ्घ्रिपल्लवा॥ २६॥
अपारिजातवार्तापि नन्दनश्रीर्भुवि स्थिता।
अबिन्दुसुन्दरी नित्यं गलल्लावण्यबिन्दुका॥ २७॥

न केवलं हिमाद्रेरेवंविधस्य त्वं सुता। यावत् स्वयमेवंविधेति च शब्दः। तत्र गौरीपक्षे—किसलयवद्रक्ताभ्यां दीप्यमानाभ्यां शोभेते। सुखेनामुं यन्न शक्यं फलं तत्र लुब्धानामीहितं प्रददाति। इन्दुवत् कान्तं मुखं यस्याः। स्निग्धा अत्यन्तकृष्णाश्च केशा यस्याः। त्यक्ता अलक्ष्मीर्यया। त्रैलोक्ये चोत्कृष्टः(ष्टा)। पद्मवद्रागो ययोः तादृशौ पादपल्लवौ यस्याः। अपगता शत्रुप्रकरचर्चा यस्याः। आह्लादिनी शोभा यस्याः। अप्सु प्रतिबिम्बितो य इन्दुः तद्वत्सुन्दरी। नित्यं च गलन्तो लावण्यबिन्दवो यस्या इति व्याख्या।

सन्ध्यादिपक्षेऽत्र (प्र)ज्वलत्सूर्यमरीचिभिः शोभिता। स्वापफले विश्रान्तौ यो न लुब्धः तद्विषये हितं ददाति। चन्द्रकान्तमहानीलमुक्तापद्मरागा मणिविशेषाः। अविद्यमानपारिजाताख्यवृक्षविशेषवार्ता। देवोद्यानलक्ष्मीः। अविद्यमानैर्बिन्दुभिः सुन्दरीति श्लोकत्रये यथाक्रममुपमारूपकविरोधप्रतिभोत्पत्तिहेतवः श्लेषाः।

अत्र प्रथमश्लोकाद्यावेदित (?) त्रिजगद्रत्नमित्यत्र भुविस्थितेत्यत्र च स्वरादिसाम्यादर्थश्लेषत्वम्। अन्यत्र तु शब्दश्लेषता। तथाहि—

अस्वापेत्यादावैकपद्ये थाथादि ( पा. ६-२-१४४ )स्वरेणान्तोदात्तत्वं लघुप्रयत्नत्वं च । पदद्वये तु सत्याद्ये पदे तत्पुरुषे तुल्यार्थेति (पा० ६-२-२) पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वम् । अकारैकारयोश्च गुरुप्रयत्नत्वम् । अन्त्यपदे तु थाथादिस्वरेणाद्यु(न्तो)दात्तत्वम् ।

द्वितीयस्मिन् श्लोक उक्तैकपदवर्जं सर्वत्रापि भिन्नपदपाठात्प्रयत्नभेदः । मुक्ताश्रीरित्यत्र स्वरभेदोऽपि । बहुव्रीहिपक्षे हि बहुव्रीहौ प्रकृत्ये-(पा० ६-२-१) ति पूर्वपदप्रकृतिस्वरत्वम् ।

तृतीयस्मिन् श्लोके प्रयत्नभेदः क्वचित् स्वरभेदश्च । अपगतारिजातवार्तत्वे हि बहुव्रीहौ प्रकृत्येति पूर्वपदप्रकृतिस्वरत्वम् । अविद्यमानपारिजातवार्तत्वे नञ्सुभ्यामि (पा. ६-२-१७२) त्यन्तोदात्तत्वम् । नन्दनश्रीरित्यत्र बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं तत्पुरुषे तु समासान्तोदात्तत्वम् । अविन्दुवत्सुन्दरीत्यत्रोपमानत्वात्तत्पुरुषे तुल्यार्थेति पूर्वपदप्रकृतिस्वरः । तस्य सप्तम्यन्तपूर्वपदत्वादनेनैव सूत्रेण प्रकृतिस्वरेणाद्युदात्तत्वम् । अविन्दुसुन्दरीत्यत्र त्वव्ययत्वान्नञ्पूर्वपदप्रकृतिस्वरेण तदेव । तेन नात्र स्वरभेदः ।

एतच्च श्लेषलक्षणं परीक्ष्यमाणमयुक्तमिव प्रतिभाति ।

तथाहि—

ते गच्छन्ति महापदं भुवि पराभूतिः समुत्पद्यते
तेषां तैः समलंकृतं निजकुलं तैरेव लब्धा क्षितिः ।
तेषां द्वारि नदन्ति वाजिनिवहास्ते भूपिता नित्यशो
ये दृष्टाः परमेश्वरेण भवता रुष्टेन तुष्टेन वा ॥

इत्यादौ श्लेषे प्राप्तप्रतिष्ठे पल्लवाताम्रेत्यादौ संकरत्वमेव युक्तम् । अथवा न्यायपरीक्षायामुपमारूपत्वमेव ।

तथाहि-यथा गुणक्रियासाम्य उपमा तथा शब्दमात्रसाम्येऽपि दृश्यते । न च तत्र श्लेषत्वमिति वक्तुं युक्तम् । पूर्णोपमाया निर्विषयत्वप्रसङ्गात् । गुणक्रियासाम्ये सा भविष्यतीति चेत् । न । अर्थश्लेषस्य निर्विषयतापत्तिप्रसङ्गात् । अथास्मदुपदर्शितशब्दश्लेषवदुपमाविरहितोऽर्थश्लेषस्य विषयः कल्प्यते । तद्द्वयोरन्यत्र लब्धसत्ताकयोरेकत्र संनिपाते संकरतैव प्राप्नोति । अपि च गुणक्रियासाम्यमुपमा शब्दसाम्यं तु श्लेष इति विशेषस्या(न)भिधानात् शब्दसाम्यमुपमाया विषयः, श्लेषस्य तूपमाविरहित इति पल्लवेत्यादावुपमैव न्याय्या । एवं च 'प्रसाध्यते स्मे' (का-सा-सं. १-२७) त्यादावेकदेशविवर्तिरूपकमुचितम् । अन्यथास्य श्लिष्टत्वं वा वाच्यं स्यात् ।

न च भास्वत्करविराजितेत्यर्थश्लेष उपपन्नः। वैचित्र्यमलंकारोऽभिधीयत इति कविप्रतिभासंरम्भगोचरोऽर्थोऽलंकार्यः । तद्धर्मश्चालंकार्यः(रः) । न च भास्वदित्यादावर्थः संरम्भगोचर इति शब्दस्यालंकृतत्वम् । काव्ये दोषगुणालंकाराणां च शब्दार्थगततयाऽन्वयव्यतिरेकाभ्यां विभागः क्रियते। न च भानुदीप्यमानादिशब्दसद्भावेऽलंकारोऽत्रेति शब्दान्वयव्यतिरेकानुविधायिनोऽस्य शब्दालंकारत्वमेव युक्तम् । एकप्रयत्नोच्चार्याणामित्यनेकाक्षेपे शब्दानां श्लिष्टताऽभ्युपगतैवेत्यर्थोक्तिविशिष्टमित्यन्तःशून्यमेव । अभङ्गसभङ्गत्वेनानयोस्तु शब्दश्लेषयोर्भेदः ।

अर्थश्लेषस्य तु

आकृष्यादावमन्दग्रहमलकचयं वक्त्रमासज्य वक्रे
कण्ठे लग्नः सुकण्ठः प्रभवति कुचयोर्दत्तगाढाङ्गसङ्गः ।
बद्धासक्तिर्नितम्बे पतति चरणयोर्यः स तादृक् प्रियो मे
बाले लज्जा प्रलीना नहि नहि सरले चोलकः किं त्रपाकृत् ॥

इत्याद्युदाहरणं देयम् ।

एवं चाबिन्दुसुन्दरीत्यादौ शब्दालंकारो विरोधः । अत्र हि श्लेषस्य प्रतिभामात्रं न तु प्ररोहः । न च विरोधाभास इव विरोधः श्लेषाभासः श्लेषः । एवमन्येऽपि शब्दालंकारा ज्ञेयाः ।

तथाहि रुद्रटेनोक्तम्—

स्फुटमर्थालंकारावेतावुपमासमुच्चयौ किंतु ।
आश्रित्य शब्दमात्रं सामान्यमिहापि संभवतः ॥ (का. ४-३२)

इति । उदाहृतं च—

यदनेकपयोधिभुजस्तवैव सदृशोऽस्यहीनसुरतरसः ।
ननु बलिजितः कथं ते सदृशस्तदसौ सुराधिकृतः ॥
वसुधामहितसुरा जितनीरागमना भवांश्च वर्षाश्च ।
सुरचितवराहवपुषस्तव च हरेश्चोपमा घटते ॥ (रुद्र. का. ४-३३,३४)

इति । एवं चेह चतुर्थं रूपकं श्लेषव्यतिरेकश्च । यदुक्तं तस्योक्तनयेन शब्दालंकारत्वमेव युक्तम् । एवमादौ शब्दमूलालंकारे(रो) न तु शब्दस्यालंकार इति चेत् । उक्तमत्र वैचित्र्यमलंकार इति । यद्वैचित्र्यं तस्यालंकार इति यथोक्तमेव साधु । भवन्तु वा परमेवंभूता उभयस्यालंकाराः नार्थस्येति विचार्यमेतद्विद्वद्भिः । न तु झटित्येवासूयितव्यम् ॥

इत्युद्भटालंकारविवृतौ चतुर्थो वर्गः ।

---

# अथ पञ्चमो वर्गः ।

---

अपह्नुतिं विशेषोक्तिं विरोधं तुल्ययोगिताम् ।
अप्रस्तुतप्रशंसां च व्याजस्तुतिनिदर्शने ॥ १ ॥
उपमेयोपमां चैव सहोक्तिं संकरं तथा ।
परिवृत्तिं च जगदुरलंकारान् परे गिराम् ॥ २ ॥

स्पष्टम् ।

(२५)

अपह्नुतिरभीष्टा च किंचिदन्तर्गतोपमा ।
भूतार्थापह्नवेनास्या निबन्धः क्रियते बुधैः ॥ ३ ॥

उपमानगुणाधिक्यादुपमानत्व(मात्व)मेवोन्मग्नमिति किंचित्मनाक् । अन्तःकृतोपमा अपह्नुतिः । न तु रूपकादिरूपेत्याह–भूतेति । सत्यमर्थं निह्नुत्योपमापर्यालोचनादसत्यार्थविधिर्यस्तद्रूपा ।

उदाहरणम्—

एतद्धि न तपः सत्यमिदं हालाहलं विषम् ।
विशेषतः शशिकलाकोमलानां भवादृशाम् ॥ ४ ॥

हालाहलं विषविशेषः ।

(२६)

यत्सामर्थ्येऽपि शक्तीनां फलानुत्पत्तिबन्धनम् ।
विशेषस्याभिधित्सातस्तद्विशेषोक्तिरिष्यते ॥ ५ ॥
दर्शितेन निमित्तेन निमित्तादर्शनेन च ।
तस्या बन्धो द्विधा लक्ष्ये दृश्यते ललितात्मकः ॥ ६ ॥

कंचित् विशेषमवगमयितुं कारणानामविकलत्वेऽपि कार्यस्यानुत्पत्तिर्बध्यते सा विशेषोक्तिः । तत्र निमित्तं कदाचिदुक्तम् । कदाचिदनुक्तमेव । तेनैतास्तिस्रः(षा द्विधा) ।

तत्र द्वितीयस्योदाहरणम्—

